# श्रीमत्केशवकाश्मीरिभट्टविरचितवेदान्तकौस्तुभप्रभायाः समीक्षणम्

## श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठस्य

(मानितविश्वविद्यालयस्य)

**विद्यावारिधिः (Ph. D.)**

इत्युपाधये प्रस्तुतोऽयं शोधप्रबन्धः

वर्षम्-2019

**SHREE LAL BAHADUR SHASTRI RASHTRIYA SANSKRIT VIDY[illegible]**

**(DEEMED UNIVERSITY)**




शोधनिर्देशकः
प्रो० प्रभाकरप्रसादः

अनुसन्धात्री
मनजीत कौर

## दर्शनसङ्कायः

## सर्वदर्शनविभागः

श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्

(मानितविश्वविद्यालयः)

कुतुबसांस्थानिकक्षेत्रम्, नवदेहली- ११००१६

संवत्
2076

पंजीयन सं.
63-A/09



# श्रीमत्केशवकाश्मीरिभट्टविरचितवेदान्तकौस्तुभप्रभायाः समीक्षणम्

श्रीलालबहादुरशास्त्री
राष्ट्रियसंस्कृतविद्यापीठम्



SHREE LAL BAHADUR SHASTRI
RASHTRIYA
SANSKRIT VIDYAPEETH

श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठस्य
(मानितविश्वविद्यालयस्य)

विद्यावारिधिः (Ph. D.) इत्युपाधये प्रस्तुतोऽयं
शोधप्रबन्धः

| शोधनिर्देशकः | विभागाध्यक्षा | सङ्कायाध्यक्षः | अनुसन्धात्री |
|---|---|---|---|
| प्रो० प्रभाकर प्रसादः | प्रो० संगीता खन्ना | प्रो०हरेरामत्रिपाठी | मनजीत कौर |

दर्शनसङ्कायः
सर्वदर्शनविभागः
श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठस्य
(मानितविश्वविद्यालयः) नवदेहली- ११००१६

| संवत् | ई. सन् | पंजीयन सं. |
|---|---|---|
| 2076 | 2019 | 63-A/09 |



# श्रीमत्केशवकाश्मीरिभट्टविरचितवेदान्तकौस्तुभप्रभायाः समीक्षणम्

श्रीलालबहादुरशास्त्री
राष्ट्रियसंस्कृतविद्यापीठम्



SHREE LAL BAHADUR SHASTRI
RASHTRIYA
SANSKRIT VIDYAPEETH

श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठस्य
(मानितविश्वविद्यालयस्य)

विद्यावारिधिः (Ph. D.) इत्युपाधये प्रस्तुतोऽयं

शोधप्रबन्धः

| शोधनिर्देशकः | विभागाध्यक्षा | सङ्कायाध्यक्षः | अनुसन्धात्री |
|---|---|---|---|
| प्रो० प्रभाकर प्रसादः | प्रो० संगीता खन्ना | प्रो०हरेरामत्रिपाठी | मनजीत कौर |

दर्शनसङ्कायः

सर्वदर्शनविभागः

श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठस्य

(मानितविश्वविद्यालयः) नवदेहली- ११००१६

| संवत् | ई. सन् | पंजीयन सं. |
|---|---|---|
| 2076 | 2019 | 63-A/09 |

# मंगलाचरणम्

जिज्ञास्यं च जगद्धेतुं शास्त्रयोनिं तदन्वितम्।

श्रीकृष्णं नियमानन्दं वन्दे बुद्धिप्रदं गुरुम्।।

# मंगलाचरणम्

जिज्ञास्यं च जगद्धेतुं शास्त्रयोनिं तदन्वितम्।
श्रीकृष्णं नियमानन्दं वन्दे बुद्धिप्रदं गुरुम्।।




## रचनास्वत्वाधिकारप्रमाणपत्रम्




## रचनास्वत्वाधिकारप्रमाणपत्रम्




# शोधच्छात्रस्य प्रतिज्ञापत्रम्

मनजीत कौर अहं स्वीयं शोधप्रबन्धं "श्रीमत्केशवकाश्मीरिभट्टविरचितवेदान्तकौस्तुभप्रभायाः समीक्षणम्" इति शीर्षक्रमेण प्रस्तौमि। अस्मिन् शोधप्रबन्धे वेदान्तदर्शनाभिमतं मङ्गलतत्त्वविचारः मया सूक्ष्मक्षिकया विहितः।

शोधकार्यस्यास्य सम्पूर्णं दायित्वं मदीयमेवेति, अथ च निसर्गतो यद्यस्मिंस्तुकुत्रचित्स्खलनं त्रुटिर्वा भवेत्तदा संशोधनाय सर्वदोद्यतोऽस्मीति।

Manjeet 11/10/2019

दिनाङ्कः ..11./.10./२०१९....

स्थानम्- नवदेहली

मनजीत कौर

शोधछात्रा




# शोधच्छात्रस्य प्रतिज्ञापत्रम्

मनजीत कौर अहं स्वीयं शोधप्रबन्धं **“श्रीमत्केशवकाश्मीरिभट्टविरचितवेदान्तकौस्तुभप्रभायाः समीक्षणम्”** इति शीर्षक्रमेण प्रस्तौमि। अस्मिन् शोधप्रबन्धे वेदान्तदर्शनाभिमतं मङ्गलतत्त्वविचारः मया सूक्ष्मक्षिकया विहितः।

शोधकार्यस्यास्य सम्पूर्णं दायित्वं मदीयमेवेति, अथ च निसर्गतो यद्यस्मिंस्तुकुत्रचित्स्खलनं त्रुटिर्वा भवेत्तदा संशोधनाय सर्वदोद्यतोऽस्मीति।

Manjeet 11/10/2019

दिनाङ्कः ..11./.10./.2019....  मनजीत कौर

स्थानम्- नवदेहली  शोधछात्रा




# शोधच्छात्रस्य घोषणापत्रम्

मया मनजीत कौर सहर्षमुद्घोष्यते यत् प्रो. प्रभाकरप्रसादस्य मार्गनिर्देशेन प्रस्तुतस्यास्य शोधप्रबन्धस्य सर्वमपि लेखकार्यं मयैव विहितमस्ति। अथ च कार्यमेतत् मौलिकमप्यस्ति। अनुसन्धानकार्यमिदं जनवरी २०१६ ई. तः सितम्बरः २०१९ ई. पर्यन्तं श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठस्य दर्शनसङ्कायान्तर्गते सर्वदर्शनविभागे विहितम्।

शोधप्रबन्धे स्वीकृताः सामग्र्यः पूर्णतया आंशिकरूपेण वा अन्यत्र कुत्रापि उपाधि/डिप्लोमादिप्राप्त्यर्थं नैव प्रस्तुताः।

अहं हृदयेन स्वीकरोमि यदन्यशोधकर्तृणां ग्रन्थानां वा या सामग्री शोधप्रबन्धलेखने विवेचने वा प्रयुक्ताऽस्ति तत्र तेषां लेखकानां ग्रन्थानाञ्चोल्लेखो मया विहितः। इदमपि प्रमाणीकरोमि यत् पत्रिकासु, पुस्तकेषु लघुशोधप्रबन्धेषु सङ्गणकसूचनास्थलेषु (website) उपलब्धस्य कस्यापि कार्यस्य निष्कर्षस्य वा जानत्या यथावद् उपयोगः नास्मिन् शोधप्रबन्धे मया अकारि, न वा एतादृशं किमपि कार्यं स्वीय मौलिककार्यत्वेनोद्घोषितमिति।

Manjeet

दिनांकः-...11/10/2019 मनजीत कौर 11/10/2019

स्थानम्- नव देहली शोधच्छात्रा

## शोधनिर्देशक- प्रमाणपत्रम्

सहर्षं प्रमाणीक्रियते यत् मनजीत कौर, इत्यस्याः कथनं लेखनञ्च मद् दृष्ट्या सत्यमस्तीति।

शोधनिर्देशकः प्रभाकरप्रसाद 11/10/19

(प्रो. प्रभाकरप्रसादः)

सर्वदर्शनविभागः

श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्




# शोधच्छात्रस्य घोषणापत्रम्

मया मनजीत कौर सहर्षमुद्घोष्यते यत् प्रो. प्रभाकरप्रसादस्य मार्गनिर्देशेन प्रस्तुतस्यास्य शोधप्रबन्धस्य सर्वमपि लेखकार्यं मयैव विहितमस्ति। अथ च कार्यमेतत् मौलिकमप्यस्ति। अनुसन्धानकार्यमिदं जनवरी २०१६ ई. तः सितम्बरः २०१९ ई. पर्यन्तं श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठस्य दर्शनसङ्कायान्तर्गते सर्वदर्शनविभागे विहितम्।

शोधप्रबन्धे स्वीकृताः सामग्र्यः पूर्णतया आंशिकरूपेण वा अन्यत्र कुत्रापि उपाधि/डिप्लोमादिप्राप्त्यर्थं नैव प्रस्तुताः।

अहं हृदयेन स्वीकरोमि यदन्यशोधकर्तृणां ग्रन्थानां वा या सामग्री शोधप्रबन्धलेखने विवेचने वा प्रयुक्ताऽस्ति तत्र तेषां लेखकानां ग्रन्थानाञ्चोल्लेखो मया विहितः। इदमपि प्रमाणीकरोमि यत् पत्रिकासु, पुस्तकेषु लघुशोधप्रबन्धेषु सङ्गणकसूचनास्थलेषु (website) उपलब्धस्य कस्यापि कार्यस्य निष्कर्षस्य वा जानत्या यथावद् उपयोगः नास्मिन् शोधप्रबन्धे मया अकारि, न वा एतादृशं किमपि कार्यं स्वीय मौलिककार्यत्वेनोद्घोषितमिति।

Manjeet

मनजीत कौर 11/10/2019

दिनांकः- 11/10/2019

शोधच्छात्रा

स्थानम्- नव देहली

**शोधनिर्देशक- प्रमाणपत्रम्**

सहर्षं प्रमाणीक्रियते यत् मनजीत कौर, इत्यस्याः कथनं लेखनञ्च मद् दृष्ट्या सत्यमस्तीति।

प्रभाकरप्रसादः

शोधनिर्देशकः 11/10/19

(प्रो. प्रभाकरप्रसादः)

सर्वदर्शनविभागः

श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्




**सर्वदर्शनविभागः**

**दर्शनसङ्कायः**

**श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्**

**नवदेहली- ११००१६**

# प्रस्तुति-पूर्व-सङ्गोष्ठीसफलताप्रमाणपत्रम्

प्रमाणीक्रियते यत् मनजीतकौर सर्वदर्शनविभागस्य नियमितशोधच्छात्राऽस्ति अनेन विद्यावारिधिः (पीएच. डी.) पाठ्यक्रमपूर्त्यर्थमपेक्षिता प्रस्तुतिपूर्वसङ्गोष्ठी (Pre Submission Seminar) 16/07/2019 दिनाङ्के सफलतापूर्वकं सम्पादिता।

**शोधविषयः-**

**श्रीमत्केशवकाश्मीरिभट्टविरचितवेदान्तकौस्तुभप्रभायाः समीक्षणम्**

प्रभाकरप्रसादः 11/10/19

दिनाङ्केः- 11/10/19.......

(प्रो. प्रभाकरप्रसादः)

स्थानम्- नवदेहली

सर्वदर्शनविभागः

दर्शनसङ्कायः

श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्




सर्वदर्शनविभागः

दर्शनसङ्कायः

श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्

नवदेहली- ११००१६

# प्रस्तुति-पूर्व-सङ्गोष्ठीसफलताप्रमाणपत्रम्

प्रमाणीक्रियते यत् मनजीतकौर सर्वदर्शनविभागस्य नियमितशोधच्छात्राऽस्ति अनेन विद्यावारिधिः (पीएच. डी.) पाठ्यक्रमपूर्त्यर्थमपेक्षिता प्रस्तुतिपूर्वसङ्गोष्ठी (Pre Submission Seminar) 16/07/2019 दिनाङ्के सफलतापूर्वकं सम्पादिता।

**शोधविषयः-**

**श्रीमत्केशवकाश्मीरिभट्टविरचितवेदान्तकौस्तुभप्रभायाः समीक्षणम्**

प्रभाकरप्रसादः 11/10/19

दिनाङ्के:- 11/10/19.......

(प्रो. प्रभाकरप्रसादः)

स्थानम्- नवदेहली

सर्वदर्शनविभागः

दर्शनसङ्कायः

श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्




सर्वदर्शनविभागः

दर्शनसङ्कायः

श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्

नवदेहली- ११००१६

# प्रस्तुति-पूर्व-सङ्गोष्ठीसफलताप्रमाणपत्रम्

प्रमाणीक्रियते यत् मनजीतकौर सर्वदर्शनविभागस्य नियमितशोधच्छात्राऽस्ति अनेन विद्यावारिधिः (पीएच. डी.) पाठ्यक्रमपूर्त्यर्थमपेक्षिता प्रस्तुतिपूर्वसङ्गोष्ठी (Pre Submission Seminar) 16/07/2019 दिनाङ्के सफलतापूर्वकं सम्पादिता।

**शोधविषयः-**

**श्रीमत्केशवकाश्मीरिभट्टविरचितवेदान्तकौस्तुभप्रभायाः समीक्षणम्**

प्रभाकरप्रसादः 11/10/19

दिनाङ्के:- 11/10/19.......  (प्रो. प्रभाकरप्रसादः)

स्थानम्- नवदेहली

सर्वदर्शनविभागः

दर्शनसङ्कायः

श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्




# रचनास्वत्वाधिकारहस्तान्तरणप्रमाणपत्रम्

**शोधप्रबन्धशीर्षकम्- श्रीमत्केशवकाश्मीरिभट्टविरचितवेदान्तकौस्तुभप्रभायाः समीक्षणम्**

**शोधच्छात्रा-** Manjeet **मनजीतकौर**

## ॥ रचनास्वत्वाधिकारहस्तान्तरणप्रमाणपत्रम् ॥

विद्यावारिधिः/ (पीएच. डी.) इत्युपाधये उपर्युक्तविवरणानुसारेणनिर्दिष्टस्य शोध-प्रबन्धस्य पाठ्यक्रमपूर्त्यर्थमपेक्षितारचनास्वत्त्वाधिकाराभ्यन्तर्गतान् सर्वानप्यधिकारान् अधोहस्ताक्षरितेन पत्रमाध्यमेन श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठं प्रतिहस्तान्तरयतीति।

दिनाङ्कः 11/10/2019

स्थानम्- नवदेहली

Manjeet
मनजीतकौर 11/10/2019
शोधच्छात्रा

टिप्पणीः- विश्वविद्यालयरचनास्वत्त्वाधिकारसूचनाप्रदानपूर्वकं लेखकः शोधप्रबन्धमिमं पुनः प्रस्तोतुं कमप्यन्यं शब्दशः अंशतया वा प्रस्तुतयेऽधिकर्तुस्वस्योपयोगाय पुनर्व्युत्पादयितुमपि शक्नोति।




# रचनास्वत्वाधिकारहस्तान्तरणप्रमाणपत्रम्

शोधप्रबन्धशीर्षकम्- श्रीमत्केशवकाश्मीरिभट्टविरचितवेदान्तकौस्तुभप्रभायाः समीक्षणम्

शोधच्छात्रा- मनजीतकौर

## ॥ रचनास्वत्वाधिकारहस्तान्तरणप्रमाणपत्रम् ॥

विद्यावारिधिः/ (पीएच. डी.) इत्युपाधये उपर्युक्तविवरणानुसारेणनिर्दिष्टस्य शोध-प्रबन्धस्य पाठ्यक्रमपूर्त्यर्थमपेक्षितारचनास्वत्त्वाधिकाराभ्यन्तर्गतान् सर्वानप्यधिकारान् अधोहस्ताक्षरितेन पत्रमाध्यमेन श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठं प्रतिहस्तान्तरयतीति।

दिनाङ्कः ..11../.10../.2019

स्थानम्- नवदेहली

मनजीतकौर 11/10/2019

शोधच्छात्रा

टिप्पणीः- विश्वविद्यालयरचनास्वत्त्वाधिकारसूचनाप्रदानपूर्वकं लेखकः शोधप्रबन्धमिमं पुनः प्रस्तोतुं कमप्यन्यं शब्दशः अंशतया वा प्रस्तुतयेऽधिकर्त्तुस्वस्योपयोगाय पुनर्व्युत्पादयितुमपि शक्नोति।



Accredited at the 'A' Grade by

क्रमाङ्कः 0011161

# श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्

( मानितविश्वविद्यालयः), नई दिल्ली–११००१६

[illegible]र्थिनाम : मनजीत कौर

[illegible]तिनाम : श्री राजा सिंह

अनुक्रमाङ्कः : 11429

नामाङ्कनसङ्ख्या : 63-A/09

## विशिष्टाचार्य–संस्कृत–परीक्षालब्धाङ्कपत्रम् - 2015

## MARKSHEET OF M.Phil-SANSKRIT-2015

| विषयः Subject सर्वदर्शनम् Sarvadarsanam | पूर्णाङ्काः/क्रेडिट्स | | प्राप्ताङ्काः/क्रेडिट्स | |
|---|---|---|---|---|
| **प्रथमसत्रम्** | | | | |
| १. प्रथमपत्रम् | 100 | 4 | 60 | 4 |
| २. द्वितीयपत्रम् | 100 | 4 | 63 | 4 |
| ३. तृतीयपत्रम् | 100 | 4 | 78 | 4 |
| **द्वितीयसत्रम्** | | | | |
| ४. चतुर्थपत्रम् | 100 | 4 | 60 | 4 |
| ५. पञ्चमपत्रम् | 100 | 4 | 75 | 4 |
| ६. षष्ठपत्रम् | 100 | 4 | 65 | 4 |
| **प्रथमसत्रस्य योगः** | **300** | **12** | **201** | **12** |
| **द्वितीयसत्रस्य योगः** | **300** | **12** | **200** | **12** |
| **पूर्णयोगः** | **600** | **24** | **401** | **24** |

परिणामः उत्तीर्ण श्रेणी : प्रथम

लघुशोधप्रबन्धस्य विषय : मीमांसाभिमतप्रमाणसमीक्षणम्

लेखकः [signature]

दिनांक: 07/01/2016

[signature]
उपकुलसचिवः(परीक्षा)



राष्ट्रीय मूल्यांकन एवं प्रत्यायन परिषद् द्वारा ए श्रेणी
Accredited at the 'A' Grade by [illegible]

क्रमाङ्कः 0011161

# श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्

( मानितविश्वविद्यालयः), नई दिल्ली–११००१६

परीक्षार्थिनाम : मनजीत कौर

पितृ/पतिनाम : श्री राजा सिंह

अनुक्रमाङ्कः : 11429

नामाङ्कनसङ्ख्या : 63-A/09

## विशिष्टाचार्य–संस्कृत–परीक्षालब्धाङ्कपत्रम् - 2015

## MARKSHEET OF M.Phil-SANSKRIT-2015

| विषयः सर्वदर्शनम्<br>Subject Sarvadarsanam | पूर्णाङ्काः/क्रेडिट्स | | प्राप्ताङ्काः/क्रेडिट्स | |
|---|---|---|---|---|
| प्रथमसत्रम् | | | | |
| १. प्रथमपत्रम् | 100 | 4 | 60 | 4 |
| २. द्वितीयपत्रम् | 100 | 4 | 63 | 4 |
| ३. तृतीयपत्रम् | 100 | 4 | 78 | 4 |
| द्वितीयसत्रम् | | | | |
| ४. चतुर्थपत्रम् | 100 | 4 | 60 | 4 |
| ५. पञ्चमपत्रम् | 100 | 4 | 75 | 4 |
| ६. षष्ठपत्रम् | 100 | 4 | 65 | 4 |
| **प्रथमसत्रस्य योगः** | **300** | **12** | **201** | **12** |
| **द्वितीयसत्रस्य योगः** | **300** | **12** | **200** | **12** |
| **पूर्णयोगः** | **600** | **24** | **401** | **24** |

परिणामः उत्तीर्ण श्रेणी : प्रथम

लघुशोधप्रबन्धस्य विषय : मीमांसाभिमतप्रमाणसमीक्षणम्

लेखकः

दिनांकः *07/01/2016*

उपकुलसचिवः(परीक्षा)

# कृतज्ञताज्ञापमनम्

सर्वादौ जगन्नायकं परमेश्वरं प्रणम्य अहं पूज्यपितरं 'श्रीराजासिंह:' त्यागमयीं तपोमूर्तिस्वरूपां पूज्यमातरं 'श्रीमती मोनिका प्रणमामि। पदे-पदे च येषामाशीर्वादमहं प्राप्तवान्। ममायं शोधप्रबन्ध: मम पितृभ्यां चरणयो: समर्पित: स्यात्।

अस्य शोधप्रबन्धस्य सम्यक्सम्पादने अनेकेषां गुरुचरणानां सहयोगिनां, मित्राणं एवं भारतीयदार्शनिकानुसन्धानपरिषदानामपि(ICPR) चाशिर्वचांसि सहयोगश्चासीदत: तेभ्य: सर्वेभ्य: हृदयेन सश्रद्धं प्रणामाञ्जलिं नमस्कारं वितनोमि। तेषु सर्वप्रथममस्य शोधप्रबन्धस्य कृते मम शोधप्रबन्धस्य कृते मम शोधनिर्देशकेन गुरुणा अहं सदा उपकृत: अस्मि। ये वात्सल्यस्वभावमैत्रीभावगुरुतापूर्णेन निर्देशेन मां उपकृतवान्, मम् शोधकार्ये च सहयोगं प्रदाय सम्पन्नं कारितम्। तत्तु अतुल्यमेवास्ति। अहमेतादृशपरमपूज्यगुरुं मार्गनिर्देशकं प्रो. प्रभाकरप्रसादमहोदयं सहृदयं सश्रद्धञ्च प्रणमामि।

अहं विभागाध्यक्षं येषां स्वभाव: एव छात्रा कल्याणकर: अस्मि। ये माम् स्व आध्यक्ष्ये विभागे शोधकार्याय अनुमतिं प्रदाय उपकृतवन्त: एतादृशं प्रो. संगीताखन्नामहोदया: ताभ्य: मातृकल्पाभ्य: सविनयं सप्रणामं कृतज्ञतां निवेदयामि।अपि च आचार्या: सन्ति स्वनामधन्या: प्रो. जवाहरलालमहोदया: तेभ्य: गुरुचरणेभ्य: सप्रश्रयं प्रणामं आभारं च प्रदर्शयामि।

अहं दर्शनसङ्कायाध्यक्षं सदानुकरणीयं शास्त्रमर्मज्ञं प्रो. हरेरामत्रिपाठीमहोदयं प्रति सहृदयेन सश्रद्धया च प्रणमामि धन्यवादञ्चज्ञापयामि।

अहं विद्यापीठस्य कुलपतिवर्यै: प्रो. श्रीरमेशकुमारपण्डेयमहोदयै: सहृदयेन धन्यवादं विज्ञापयामि। येषां मार्गदर्शनेन शोधनिर्देशनेन च मम शोधकार्यं समाप्तिं प्रत्यगच्छत्।

अहं भारतीयदार्शनिकानुसन्धानपरिषदस्य (ICPR) सर्वेभ्यः सदस्येभ्यः आभारं कृतज्ञतां च व्यवहारामि। येषां द्विवार्षिकी शोधछात्रवृत्तिः सहयोगरूपेण मया प्राप्ता।

अहं पुस्तकालयस्य सर्वेभ्यः सदस्येभ्यः आभारं कृतज्ञतां च व्याहरामि। येषां महत्त्वपूर्वणः सहयोगः मया प्राप्ता। शैक्षणिकविभागे स्थितानां श्रीसुच्चासिंहः, श्रीधर्मेन्द्रकुमारः, आदि महोदयानां प्रति अहं धन्यवादं व्याहरामि। येषां समये- समये सहयोगः मया प्राप्ता।

मम पितरौ श्रीमतीमोनिका (माता) श्रीराजासिंहः (पिता), पतिः श्री प्रदीपकुमारः, अनुजभ्रातरौ सौरभसिंहः गौरवसिंहश्च एतेभ्यः यथायोग्यं सविनयं प्रणामं निवेदयामि। येषां प्रेम्णा सौहार्देन आशीर्वादेन सततसहयोगप्रदानेन च अध्ययनकालादारभ्य इदानीं यावत् मम शोधप्रबन्धकार्यं सम्पूर्णं जातम्। एतेषामहं सदा ऋणिरस्मि।

मनजीतकौरः



# विषयानुक्रमणिका

द्वितीयोऽध्याय:

## संकेताक्षरसूची

| | |
|---|---|
| 1. अपास्तम्भधर्मसूत्र | आप. धर्म. |
| 2. ईशावास्योपनिषत् | ईशा. |
| 3. ऋग्वेद् | ऋग्वे. |
| 4. ऐतरीयोपनिषत् | ऐत. |
| 5. कठोपनिषद् | कठ. |
| 6. कैवल्योपनिषद् | कैव. |
| 7. कौषीतक्योपनिषद् | कौषी. |
| 8. तैत्तिरीय आरण्यक | तै. आ. |
| 9. नारायणी उपनिषद् | ना. उ. |
| 10. ब्रह्मसूत्र | ब्र. सू. |
| 11. बृहदारण्यकोपनिषद् | ब्र. उ. |
| 12. प्रधानमिति यावत् | प्र. या. |
| 13. मुण्डकोपनिषदि | मु. उ. |
| 14. महाभारत | म. भा. |
| 15. महानारायणोपनिषद् | म. उ. |
| 16. यजुर्वेद | यजु. |
| 17. विष्णुपुराण | वि.पु. |
| 18. सर्वदर्शनसंग्रह | स. द. |
| 19. स्मृते: | स्मृ. |
| 20. श्वेताश्वरोपनिषद् | श्वे. उप. |
| 21. श्रीमद्भगवद्गीता | श्री. गी. |

# श्रीमत्केशवकाश्मीरिभट्टविरचितवेदान्तकौस्तुभप्रभायाः समीक्षणम्

## अध्याययोजना

### भूमिका

**तृतीयोऽध्यायः** (वेदान्तकौस्तुभप्रभायाः तृतीयाध्यायस्य समीक्षात्मकः)

१. प्रथमपादस्य वेदान्तकौस्तुभप्रभायाः तृतीयाध्यायस्य समीक्षणम्

२. द्वितीयपादस्य वेदान्तकौस्तुभप्रभायाः तृतीयाध्यायस्य समीक्षणम्

३. तृतीयपादस्य वेदान्तकौस्तुभप्रभायाः तृतीयाध्यायस्य समीक्षणम्

४. चतुर्थपादस्य वेदान्तकौस्तुभप्रभायाः तृतीयाध्यायस्य समीक्षणम्

**चतुर्थोऽध्यायः** (वेदान्तकौस्तुभप्रभायाः चतुर्थाध्यायस्य समीक्षात्मकः)

१. प्रथमपादस्य वेदान्तकौस्तुभप्रभायाः चतुर्थाध्यायस्य समीक्षणम्

२. द्वितीयपादस्य वेदान्तकौस्तुभप्रभायाः चतुर्थाध्यायस्य समीक्षणम्

३. तृतीयपादस्य वेदान्तकौस्तुभप्रभायाः चतुर्थाध्यायस्य समीक्षणम्

४. चतुर्थपादस्य वेदान्तकौस्तुभप्रभायाः चतुर्थाध्यायस्य समीक्षणम्

**उपसंहारः-**

# भूमिका

**जिज्ञास्यं च जगद्धेतुं शास्त्रयोनिं तदन्वितम्।**

**श्रीकृष्णं नियमानन्दं वन्दे बुद्धिप्रदं गुरुम्॥**

## भारतीयदर्शनस्य परिचयः-

दृष्टिविषयकरणमेवदर्शनमिति भावव्युत्पत्त्या दृशिर् प्रेक्षणे ल्युटि कृते निष्पन्नोऽयं दर्शनशब्दः। यस्यार्थः प्रेक्षणं, दर्शनमिति। दृश्यते अनेनेति दर्शनमित्येव करणव्युत्पत्त्या दर्शनानां, दर्शनग्रन्थानां, दार्शनिकानाञ्च समन्वयो दृश्यते। इत्थञ्च शाखारुन्धतीन्यायेनैव नैयायिकैः स्थूलदृष्ट्या परमाणुतः आरभ्य सृष्टिर्वितन्यते। सांख्यैश्च प्रकृत्या प्रधानेन प्रारभ्यते, वैदान्तिकैश्च तस्मादात्मनः आकाशः सम्भूतः आकाशाद्वायुः वायोरग्निः इत्यादिक्रमादारभ्यते। एवमेव प्राक्तनाः आचार्याः द्वादशदर्शनानि आमनन्ति। तेषां भेदकारणं च वेदसिद्धान्तस्वीकरणास्वीकरणं अङ्गीकुर्वन्ति।

**अस्ति वेदोदितो लोको मतिर्येषां त आस्तिका।**

**नास्ति वेदोदितो लोको मतिर्येषां त एव ते।।** (आर्यविद्यासुधाकरे)

चार्वाकजैनबौद्धाश्च नास्तिकदर्शनम्, न्यायवैशेषिकसांख्य-योगपूर्वमीमांसाउत्तरमीमांसा(वेदान्त) दर्शनमास्तिकदर्शनमिति प्रसिद्धम्। तेषु चार्वाकदर्शनस्य प्रवक्ता आचार्यो बृहस्पतिरासीदत एवेदं दर्शनं बार्हस्पत्यदर्शनमित्यपि गीयते। लोकायतदर्शनम् इति चास्ति तदीयं नामान्तरम्। चार्वाक् दर्शनं खलु चास्ति बृहस्पतिप्रणीतसूत्रेष्वनुबद्धम्। तेषां सूत्राणामधुनातनकाला-वच्छेदेनानुपलब्धिः दर्शनात् नामैव केवलं श्रूयते, तदपि केचित् दार्शनिकाः इत्थं ब्रूवन्ति यदिदं दर्शनं चार्वाकनामकेन केनचित् दैत्येन प्रणीतमस्ति। एतेषां मते जडस्वरूपाणां चतुर्णां

पृथिव्यादिद्रव्याणां परस्परसम्मेलनेन सम्पाद्यमाने देहेऽस्मिन् चैतन्यमुपजायते। इत्थञ्च चैतन्यस्य शरीरस्यैव धर्मतया चैतन्याश्रयत्वेन शरीरमेवात्मेति वदति चार्वाकः।

**देहस्य नाशो मुक्तिस्तु न ज्ञानान्मुक्तिरिष्यते।**

**अत्र चत्वारि भूतानि भूमिर्वार्योऽनिलाऽनलः।।** (चार्वाक् षष्टिः)

जैनधर्मदर्शनस्य जैनसम्प्रदायस्य प्रवर्तकः अस्ति कश्चित् अर्हतपदाभिधेयतां गतो लोकपूजितो जितरागादिः सर्वज्ञः देवविशेषः, यथोक्तम्

**सर्वज्ञो जितरागादिः सर्वथा लोकपूजितः ।**

**यथास्थितार्थवादी च देवोऽर्हन् परमेश्वरः।।**[1]

अयञ्च पद्यात्मकः श्लोकः सेश्वरवादितां बोधयति सूचयति चाऽर्हतानाम्। एतेनेतेषां निरीश्वरवादिता स्वयमेव निराकृता भवतीति विज्ञेयम्। परन्तु वेदानङ्गीकारमात्रेण जैनसम्प्रदायनिष्ठा नास्तिकता तु तथापि सुस्थिराऽक्षुण्णैव चास्तीत्यत्र नास्ति लेशतोऽपि विचिकित्सावसरो विवादो वेति। एवं नास्तिको वेद निन्दकः इति न्यायेन प्राचीनाचार्यचरणोक्त्या वापि वेदनिन्दकबौद्धचार्वाकवादे जैनाऽपरनामधेया अर्हतः अपि सन्ति। अस्मिन् मते जीवाजीवाश्रवबन्धसंवरनिर्जरामोक्षाः सप्त तत्त्वानि विद्यन्ते। तेषामेव सम्यक्दर्शन-ज्ञान-चारित्र्येण मोक्षप्राप्तिः भवतीति। तात्त्विकदृष्ट्या विचार्यमाणे जैनसम्प्रदायदिशा मूलपरमाणुस्वरूपा सर्वथा वैजात्यमापन्नेयं जडत्वेनाचेतनात्मिका खलु जैनमतसिद्धा सृष्टिः।

बौद्धदर्शनं जैनदर्शनादुत्तरकाले प्रचारितमभवत्। बौद्धदर्शनस्य भागद्वयं वर्तते। धार्मिकोभागः, दार्शनिकभागश्च। धार्मिकभागे आध्यात्मिकतत्त्व-वर्णनमाचारनिरूपणं च प्रपञ्चितम् वर्तते। दार्शनिकभागे तु तार्किकदृष्ट्या बौद्धसिद्धान्तस्य सूक्ष्मं विवेचनं

---

१- सर्वदर्शनसंग्रहः

प्रस्तुतम्। बौद्धानां मते जीवो जगच्चेत् उभयमपि अनित्यं प्रतिक्षणपरिणामशालि च। बौद्धदर्शनस्य प्रस्थानं चतुर्धा विभज्यते।

(क) वैभाषिकाः - बाह्यार्थप्रत्यक्षमङ्गीकुर्वन्ति।

(ख) सौत्रान्तिकाः – बाह्यार्थमनुमेयमाहुः।

(ग) योगाचाराः – विज्ञानवादिनः।

(घ) माध्यमिकाः – शून्यवादिनः।

(क) बौद्धदर्शने त्रीणि रत्नानि "शीलं, समाधिः, प्रज्ञा चेति"।

(ख) बौद्धदर्शने पञ्चबोधिवृक्षम् "क्षमारूपिणी जटा, धैर्यरूपि दृढमूलं, चरित्ररूपिरूपि पुष्पम्, बुद्धिरूपिणी शाखा, धर्मरूपि फलम्"।

(ग) बौद्धदर्शने पञ्च अविद्या आलस्य, जन्म-मृत्यु, काम, क्रोध, विशारदाः।

(घ) बौद्धदर्शने अष्टाङ्गमार्गः – सम्यक् दृष्टिः, संकल्पः, वाणी, कर्म-आजीविका, उद्योगः, स्मृतिः, समाधिरिति।

(ङ) बौद्धदर्शने पञ्चशीलत्वम्

१. जीवहिंसा न करणीयम्।

२. चौरकार्याद् विरक्तिः।

३. व्यभिचाराद् विरक्तिः।

४. असत्यभाषणाद् विरक्तिः।

५. मद्यपानाद् विरक्तिः। इति।

महामुनिः कपिलप्रणीतं सांख्यदर्शनमिदं सकलन्यायमीमांसा प्रभृतिदर्शनेभ्यश्चास्त्यतीव प्राचीनमिति च कर्णाकर्णिकया परम्परातः श्रूयते।

त्रिगुणात्मिकया जगत्कारणीभूतया प्रकृत्या विरचितत्त्वादस्य जगतोऽपि त्रैगुण्यं सिद्ध्यतीति। व्यावहारिकञ्चास्ति सांख्यदर्शनमिदमिति नूनं विभावनीयमिति ध्येयम्। व्यवहारेऽप्यस्माभिः त्रैगुण्यमनुभूयते सांख्यदर्शनमपि तथैवानुभावयति, तत्कारणीभूतायाः प्रकृतेरपि त्रिगुणात्मकत्वात्।

प्रकृतिश्च सत्त्वरजस्तमसां साम्यावस्थेति च निगद्यते। सैव च पुनः सत्त्वरजस्तमसां वैषम्यावस्थामापन्ना सती चराचरात्मकं जगदिदं समुत्पादयतीति जगतकारणीभूता भवतीति भावः।

न्यायवैशेषिकमतवदत्रापि सांख्यदर्शने चेतनस्य जीवात्मस्थानीयस्य पुरुषस्य बहुत्वं नानात्वञ्च कल्प्यते। इति सा कल्पना महत्येव समीचीना, तस्याः तर्कयुक्तत्वात्। अन्यथा एकस्मिन्पुरुषे स्वीक्रियमाणे तस्मिन्नेव विचित्ते सर्वे एव विचित्ताः स्युः। यतस्तस्यैव सर्वशरीरेषु विद्यमानत्वात्। एकस्मिन्वैदुष्यमापन्ने विदुषि सञ्जायमाने सर्वे एव खलु विद्वांसः स्युः।

इदञ्च सांख्यदर्शनं सेश्वरदर्शननिरीश्वरदर्शनभेदेन भिन्नं सद् द्विविधं परिगण्यते। अस्मिन् महर्षिकपिलप्रणीते सांख्यदर्शने चेश्वरानङ्गीकारात् तस्य सूत्रे कारिकायां वा नामापि न श्रूयते इतीमे कपिलमतानुयायिनः सांख्याः सन्ति निरीश्वरवादिन इति। तथा च महर्षि पतञ्जलिप्रणीते योगदर्शने चेश्वराङ्गीकाराद् तस्य सूत्रे ईश्वरस्य साक्षात् श्रूयमाणत्वात् इदं पातञ्जलयोगदर्शनं तेषाञ्चानुयायिनः सन्ति सेश्वरवादिनः। ईश्वरस्य च षडविंशतितमं तत्त्वरूपेण स्वीकाराच्चेति।

मीमांसादर्शनमिदं पूर्वमीमांसा उत्तरमीमांसा भेदेन भिन्नं सद् द्वैविध्यमापन्नमस्ति। तत्र वेदस्य पूर्वभागे योऽस्ति विषयो विचारितस्तादृशविषयविषयको विचार एव पूर्वमीमांसा शब्देनाभिधीयते। स च विचारः कर्मविषयको विचारः। यथोक्तम् –

**कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः।**[2]

इत्थञ्च तत्कर्मविषयकं विचारं विचारितवान् मुनिः जैमिनिः पूर्वभागरूपे वेदैकदेशे। अपि चैतत्कर्मविषयकविचारात्मिकां मीमांसामाश्रित्य भगवान् श्रीकृष्णोऽपि साक्षाद् ब्रूते –

**"शारीरं केवलं कर्म कुर्वन्नाप्नोति किल्विषम्"** [3]।

अर्थात् सर्वविधकामनाशून्यः सन् यत् चित्तात्मा त्यक्तसर्वपरिग्रहो यतिर्योगी वा केवलं भोजनं शयनादिरूपं कर्म कुर्वन् जीवननिर्वाहार्थं , किमपि किल्विषं नैव प्राप्नोति। अपि च

**कृतस्य कार्यस्य चेह स्फातिं समवाह।** (अथर्ववेद)

अतः पूर्वमीमांसादर्शनस्य जन्मदातृजैमिनिनये कर्मणा एवाभ्युदयनिःश्रेयसयोः समवाप्तिजनकत्वेन तस्यैव कर्मणः प्राधान्येन निरूपणम् इति।

उत्तरमीमांसादर्शनं नाम वेदान्तदर्शनम्। वेदस्यान्ते अर्थात् वेदस्योत्तरभागे ज्ञानस्यैव निरूपणीयत्वेन वेदान्तशब्दार्थो ज्ञाने पर्यवस्यतीति भावः। इत्थञ्च वेदान्तशब्दस्य ब्रह्मविद्यारूपेऽर्थे पर्यवसानं भवतीति बोध्यम्।

**भारतीयदर्शनेषु मीमांसायाः स्थानम्-**

प्राचीनकाले तत्त्वविवेचनाय 'मीमांसा' शब्दस्य प्रयोगः प्रचलित आसीत्। मीमांसायाः अर्थः मननमथवा पूजितविचारणमस्ति। संभवतः एनमाधृत्यैव पूर्वमीमांसोत्तरमीमांसयोर्नामकरणमभवत्।

दर्शनाचार्यैः समस्तभारतीयदर्शनं आस्तिकनास्तिकनाम्ना भेदद्वये विभाजितम्। तैः चार्वाकबौद्धजैनदर्शनं नास्तिकनाम्ना अभिहितम् शेषांश्च ते आस्तिकमिति कथितवन्तः।

---

२- ईशावास्योपनिषत् १।

३- श्रीमद्भगवद्गीता ४-२१।

आस्तिकानि, तानि दर्शनानि सन्ति यानि वेदानां प्रामाण्यं स्वीकुर्वन्ति। तद्भिन्नानि नास्तिकानि। किन्तु आस्तिकनास्तिकशब्दौ अन्यार्थानामपि संकेताय प्रयुज्यते। अतः अस्मै वर्गद्वयाय वैदिकावैदिक इति शब्दयोः प्रयोगः अधिको युक्तिसंगतः परिलक्ष्यते।

## भारतीयदर्शनेषु वेदान्तदर्शनस्य स्थानम्-

वेदान्तो वेदस्य अन्तिमो भागः अवसानभागः इति विग्रहेण उपनिषदं उच्यते। उपनिषद् एव प्राचीनैः वेदान्तशब्देनोक्ताः। वेदान्तसारे "वेदान्तो नाम उपनिषत्" प्रमाणमित्युक्तम्। उपनिषदोऽनेकाः तासु विरोधोऽपि प्रतिभासते। तस्यैव विरोधस्य दूरीकरणाय भगवता व्यासेन ब्रह्मसूत्राणि रचितानि। एतानि सूत्राणि पाणिन्यपेक्षया प्राचीनानि। एतेषु सूत्रेषु वेदान्तसिद्धान्ताः संग्रथिताः। निम्नलिखितविषयेषु मतैक्य धारयन्ति।

१. अनादिरनुवर्तमानोऽयं संसारोऽपास्य एव।

२. ज्ञानापेक्षया कर्मणा गौणत्वम्।

३. ब्रह्मादीन्द्रियातीतवस्तुनिरूपणे वेदाः प्रधानतया प्रमाणानि।

४. उपनिषदः गीता ब्रह्मसूत्राणि चेति प्रस्थानत्रयी सर्वैरपि प्रमाणत्वेन स्वीकृतम्।

५. ब्रह्म व्यापक नित्यश्चेतनश्च।

६. ब्रह्मैव जगज्जन्मस्थिति प्रलयकारणं नान्यदचेतन प्रकृत्यादि।

अयमेव समासेन वर्णितो वेदान्तसिद्धान्तः। भारतीय दर्शन वेदान्तपर्यवसायि, प्रथम कणादस्यारम्भवादः तदनन्तरं गौतमस्य परमाणुवादः ततः पर सांख्यस्य परिणामवादः। सर्वान्ते वेदान्तस्य सिद्धान्तः।

## वेदान्तदर्शनस्य वैशिष्ट्यम्-

"सा विद्या या विमुक्तये" "विद्ययाऽमृतमस्नुते" इति श्रुत्या धर्मार्थकाममोक्षस्य पुरुषार्थचतुष्टये मोक्ष एव परमपुरुषार्थः सर्वेषां विद्याप्रस्थानानाम्। तस्य परमपुरुषार्थरूपमोक्षतत्साधनप्रमाणादिनिरूपणपरं शास्त्रं दर्शनमिति आख्यायते। तत्र नयायवैशेषिकसांख्ययोगपूर्वोत्तरमीमांसा भेदेन षड् दर्शनानि सूत्ररूपाणि अनेकैः महर्षिभिः प्रणीतानि। परमर्षिणां व्यासप्रणीतं वेदान्तदर्शनम् औपनिषद्दर्शनमित्यपराभिधेयम् च। उपनिषदः अविद्यादि संसारनीजविशरणशीलत्वाद् उपनिषच्छब्दस्य मुख्यवृत्या ब्रह्मविद्यैव अर्थ इति तत्र वेदान्त प्रस्थानेषु सगिरन्ते ब्रह्मवादिनः। उप+नि पूर्वकस्य विशरणगत्यवसादनार्थकस्य षद्लृ धातोः क्विप् प्रत्ययान्तरस्य इदं सपमुपनिषदिति। "तद्विद्धिप्रणिपातेन परिप्रश्नेन सेवया" इति गीतावचनानुसारं गुरुपदेशं निशम्य ब्रह्मविद्यां निश्चयेन तन्निष्ठतया परिशीलयन्ति ये दृष्टानुश्राविकविषयवितृष्णास्सन्तः तेषामविद्यादेः संसारानर्थहेतुभूतस्य विशरणकर्त्री विनाशयित्री अवसादयित्री या सैव ब्रह्मविद्या। एतादृशब्रह्मविद्यामुपनिषच्छब्दवाच्यां तत्त्वेन अधिगमयितुं प्रवर्तमानं शास्त्रं वेदान्तशास्त्रम्।विदितमेवैतत् समेषां विदुषां परमत्त्वप्रदर्शनाय प्रवृत्तमेव वेदान्तदर्शनम्। वेदानां अन्तो निर्णयः परमपुरुषविषयः यत्रास्ति स वेदभागः वेदान्तशब्देन व्यवह्रियते। उपनिषदेकसमधिगम्यं परतत्वमिति "वेदान्तविज्ञानसुनिश्चितार्थाः"[4] "शास्त्रयोनित्वात्"[5] इत्यादिभिः प्रमाणवचनैः अवगच्छामः। "तद्विष्णोः परमं पदम्" इति श्रुत्यनुसारं मुमुक्षोः संसाराध्वनः पारं परमं विष्णुपदं प्रस्थितस्य तद्विद्योपदेशरूपः मार्गः वेदान्तः प्रस्थानशब्देनाभिधीयते। तदुक्तं लोचने अभिनवगुप्तेन "प्रतिष्ठन्ते परम्परया व्यवहरन्ति येन मार्गेण तत्प्रस्थानम्"[6] इति।

---

[4] -कैवल्योपनिषद्

[5] -ब्र० सू० १.१.३।

[6] -ऋग्वेद्

तथा च उपनिषत्प्रस्थानं सूत्रप्रस्थानं गीताप्रस्थानमिति प्रस्थानत्रयमपि मुमुक्षोरधिगन्तव्यं तत्त्वम् अवबोधयति, त्रिष्वपि उपनिषद् ब्रह्मसूत्रगीताप्रस्थानेषु तत्त्वप्रतिपादन प्रकारभेदे एव न तु तत्त्वभेदः। वेदान्तार्थनिर्णये उपनिषत्प्रस्थानं प्रमुखं स्थानं भजते, श्रुतिरूपत्वात्, अन्यद्द्वयं वेदमूलकं स्मृतिवत्। तन्मूलकत्वेनैव प्रमाणपदवीं भजत इति, तत्प्रस्थानमधिरूढानां नातिरोहितमेतत्।

**सूत्रप्रस्थानम्-** व्यासः, द्वैपायनः, कृष्णद्वैपायनः वादारायणः, पाराशर्यु इत्यादिनामान्तरैः प्रथितेन वादरायणेन सूत्रप्रस्थापनं प्रवर्तितम्। तत्प्रवर्तित दर्शनम् वेदान्तशास्त्रं प्रवर्तितम्। तत्प्रवर्तित दर्शनम् वेदान्तशास्त्रं, शारीरकमीमांसा, वाक्यशास्त्रं, ब्रह्ममीमांसा, वेदान्तवाक्यमीमांसा, इत्यादिपदेन व्यपदिश्यते विविधेषु ग्रन्थेषु। भगवान् बादरायण विरचितब्रह्मसूत्रस्य श्रीकण्ठशंकररामानुजानन्दतीर्थप्रभृतयः नैके आचार्याः स्व-स्व मतोपस्थापनपुरः सरं भाष्यं व्यरचयन्। तेषु साम्प्रतमतिप्रसिद्ध्या लब्धप्रचाराणि श्रीकण्ठीय भगवत्यादीय रामानुजीय आनन्दतीर्थसंज्ञानि चत्वार्थेव भाष्याणि व्याख्याभिः उपबृहितानि सर्वतः प्रचरन्ति च। तत्रं श्रीकण्ठाचार्येण शैवविशिष्टद्वैतप्रतिपादकं शैवभाष्यं (श्रीकण्ठभाष्यम्) भगवत्पादाचार्यशंकरैः अद्वैतप्रतिपादकं शांकरभाष्यम्, रामानुजाचार्यैः विशिष्टाद्वैतप्रतिपादकं श्रीभाष्यम्, आनन्दतीर्थैः द्वैतसिद्धान्तत्वेन ख्यातिमलभत। विशिष्टाद्वैत परम्परायामपि नैके आचार्यः अभूवन्। यैः अयं सिद्धान्तः प्रचारितः। शैवविशिष्टाद्वैतपरम्पराया श्रीकण्ठपरम्परायां आचार्य अप्पयदीक्षितः महता प्रयासेन श्रीकण्ठीयं शैवाद्वैतपरं शिवार्कमणिदीपिकां चिन्नबौग्मभूपालप्रेरणया ब्रह्मसूत्रकाण्ठभाष्योपरि विरचितवान् विशिष्टाद्वैतपरम्परयामपि नैके आचार्यः अभूवन, यैः अयं सिद्धान्तः प्रचारितः। शैवविशिष्टाद्वैतपरम्परायां श्रीकण्ठपरम्परायां आचार्य अप्पयदीक्षितः महता प्रयासेन श्रीकण्ठीयं शैवाद्वैतपरं व्याख्येयमिति विचिन्त्य चिन्नबोम्मभूपालप्रेरणया तदुपरि विरचितवान्। विशिष्टाद्वैतपरम्परायामपि नैके

आचार्याः अभूवन्। यैः अयं सिद्धान्तः प्रचारितः। शैवविशिष्टाद्वैतपरम्परायां श्रीकण्ठपरम्परायां आचार्य अप्पयदीक्षितः महता प्रयासेन श्रीकण्ठीय शैवाद्वैतपरं व्याख्येयमिति विचिन्त्य चिन्नबोम्मभूपालप्रेरणया तदुपरि विरचितवान्। विशिष्टाद्वैतपरम्परायामपि नैके आचार्याः अभूवन् यैः अयं सिद्धान्तः प्रचारितः। एवं श्रीमता निम्बार्काचार्येण भेदाभेदवादिसिद्धान्तपरत्वेन ब्रह्मसूत्राणां भाष्यमकारि।

उत्तरमीमांसायाः वेदान्तस्य वा मूल्यग्रन्थः बादरायणकृतब्रह्मसूत्रम्। ब्रह्मसूत्राणां न किमपि प्राचीनं भाष्यमुपलब्धम्। शङ्कराचार्यस्य शारीरकभाष्यमेवाद्य सम्मानितं भाष्यमस्ति। शंकरेण ब्रह्मसूत्राणामद्वैतवादिव्याख्या कृताऽस्ति। अस्य भाष्योपरि नैकाः टीकाः लिखितास्तया चाऽनेकाः स्वतन्त्रग्रन्थाः विरचिताः येषु अद्वैतसिद्धान्ताः सविस्तरमुपन्युस्ताः। वाचस्पतिमिश्रस्य भामतीटीका एको महत्वपूर्णो ग्रन्थः। श्रीहर्षस्य खण्डनखण्ड चित्सुखाचार्यस्य तत्त्वदीपिका चित्सुखी वेति। विद्यारण्यस्य पञ्चदशी विवरणप्रमेयसंग्रहस्तयाजीवन्मुक्तिविवेकः रूपानन्दस्य वेदान्तसारः मधूसूदनसरस्वती महोदयस्य अद्वैतसिद्धिनामिकाः प्रथिताः ग्रन्थाः। एतेषु अद्वैतवेदान्तमन्तव्यानां विस्तृतं प्रतिपादनं कृतमस्ति। धर्मराजाध्वरीन्द्रस्य वेदान्तपरिभाषा अद्वैतवेदान्तसम्बद्धतर्कशास्त्रस्य महनीयो ग्रन्थः।

**वेदान्तदर्शने निम्बार्कदर्शनस्य स्थानम्-**

निम्बार्को भेदाभेदवादी आचार्यः आसीत्। भेदस्य अर्थोऽस्ति परतन्त्रसत्ताभावः तथा च अभेदस्यार्थोऽस्ति स्वतन्त्रसत्ताभावस्य असम्भवत्वम्। निम्बार्कसिद्धान्ते ब्रह्मसत्तायाः अवस्थाचतुष्टयस्य वर्णनं प्राप्यते। ते ईश्वरावतरे विश्वसन्ति। तेऽवतारस्य त्रिविधं रूपं स्वीकुर्वन्ति गुणावतारः पुरुषावतारः लीलावतारश्च। निम्बार्कमते जीवा अनन्ता अणुपरमाणुरूपाश्च सन्ति। जीवः अंशत्वाद् ब्रह्मणो भिन्नः, किन्तु जीवः ब्रह्मणा सह तत्त्वतः एक एवास्ति। अतएव अभिन्नोऽपि कथयितुं शक्यते। गीतायाः सिद्धान्तः

यज्जीवः पुरुषोत्तमस्यांशः निम्बार्कः स्वीकरोति, किन्तु एको जीवः अपरस्माद्भिन्नो भवति।

जीवस्य प्रकारद्वयं वर्तते बद्धो मुक्तश्च। बद्धोऽपि द्विधा भवति बुभुक्षुः मुमुक्षुश्च। बुभुक्षोरपि प्रकारद्वयं भातिश्रेयस्कः नित्यसंसारी च। मुमुक्षोरपि प्रकारद्वयं भगवद्भावप्राप्तः निजस्वरूपप्राप्तश्च। "निम्बार्क अचेतनस्य (अजीवस्य) भेदत्रयं मनुते (१) अप्राकृतः (२) प्राकृतः (३)कालश्चेति। अप्राकृतेन ईश्वरस्य दिव्य ज्योतिस्तया तस्य दिव्यधामादीनि ग्रहीतव्यानि। एषः परमात्मनः परमं धाम यत्र तस्य नित्यविभूतिर्दृश्यते। प्राकृतेन महदहंकारादीनि प्रकृतेः रूपान्तराणि गृहीतव्यानि सन्ति। जगद् ब्रह्मणः परिणामोऽस्ति। जगतः जीवस्य च स्वतन्त्रसत्ता नास्ति। निम्बार्कोऽपि सांख्यरामानुजवत् परिणामवादी वर्तते, किन्तु श्रीनिवासः मनुते यत् सांख्यस्वरूपं परिणामवादि वर्तते यत्र स्वतन्त्रत्रिगुणात्मिकाप्रकृतेः परिणामः महदहंकारादयः सन्ति। निम्बार्कसिद्धान्तः शक्तिविशेषलक्षणपरिणामवादी वर्तते, यस्यानुसारं परमात्मा दृष्टेः रचनां संहारञ्च स्वविभूत्याः प्रसारेण संकोचेन च करोति। निम्बार्कः भेदमभेदञ्चोभयं सत्यं मनुते तथापि ब्रह्मजगतोः मध्ये नियन्त्रकनियन्त्रितसम्बन्धोऽस्ति। नियन्त्रकनियामकं ब्रह्म स्वतन्त्रसत्त्वमस्ति। जगत् परतन्त्रसत्त्वमस्ति। मुक्तिहेतते पूर्णमीश्वरार्पणं प्रपत्तिः आवश्यकम्। प्रपत्तेः द्वऽङ्गानि सन्ति, (१) अर्पणस्येच्छा (२) विरोधस्य परित्यागः (३) ईश्वरस्य रक्षणे विश्वासः (४) ईश्वरस्य गोमृरूपेण (रज्ञकरूपेण) स्वीकरणम् (५) अहं पूर्णतया ईश्वराश्रितोऽस्मीति दृढं विश्वासः तथा च (६) कातरताभावः। शांकरवेदान्तस्य जीवन्मुक्तिवादस्य निम्बार्केनोपहासः कृतः।

यावत्प्रारब्धकर्मणां विपाको न समास्यते तावत् मुक्तिरकल्पनीयाऽस्ति। अतः क्रममुक्तेः प्रस्तावः असंगतोऽस्ति, सद्योमुक्तिरेवोचितास्ति।

भास्करस्य भेदाभेदवादे निम्बार्कस्य च द्वैताद्वैतवादे पर्याप्तसाम्यमस्ति सहैवान्तरमपि। भास्करानुसारेण ईश्वर: (ब्रह्म) परिणामी वर्तते किन्तु निम्बार्क: तमपरिणामीति कथयति। भास्करो भेदाभेदवादी वर्तते। अभेद एव परमं सत्यमस्ति, किन्तु **शक्तिवियेण** भेदानां रचना भवति। एते भेदा अपि सत्या: सन्ति। तथापि योज्ञकाले भेदस्यास्य नाशो भवति, यतो हि स: स्वभाविको नास्ति। निम्बार्कमते भेद: सत्यस्वाभाविकश्च वर्तते। भास्करो (भेदाभेदवादस्य) भोज्ञार्थभावश्यकं मनुते परन्तु निम्बार्क: ज्ञानस्य महत्त्वं प्रतिपादयति।

पूर्वं सुदर्शनावतारेण तत्रभवता निम्बार्काचार्येण भगवत्कृष्णावतारव्यासप्रणीतानां ब्रह्मसूत्राणां वाक्यार्थरूपेण वेदान्तपरिजातसौरभाद्वय: सन्दर्भ: प्रणीत:।

य: किल निम्बार्काचार्योऽद्वैतवादस्थापनर्थं प्रातरारम्य शास्त्रार्थं कुर्वाणाय सन्ध्या समये परास्ताप सन्ध्यां लक्षयित्वा पुन:-पुन: प्रार्थ्यमानत्वेऽपि दिवाकरानवलोकनाद् भोजनमकुर्वते कस्मैचिन्मायावादियतये स्वसदनवर्तिनिम्बद्रुमे स्वप्रकाशं निधाय तमेवार्करूपेण प्रदर्श्य भुज्यतां सविश्रम्यं यतिवर दिनमिदमिति यतिमतिमुद्भाव्य तं कृतभोजनं सुप्रसन्नं विसर्जयाञ्चकार, तत: प्रभृति निम्बार्क इत्यन्वर्थसंज्ञामवाप।

अथामुष्योक्तरस्य वेदान्तपारिजातसौरभस्य शङ्कावतारेण ध्रुवसार्वज्ञतामसम्पादयित्रा श्रीनिवासाचार्येण वेदान्तकौस्तुभसंज्ञं भाष्यरूपेण विशदितमप्यतिदुरूहार्थतया विदुषामपि दुष्प्रवेशमाकल्य्य तत्र सौकर्येण प्रवेशाय प्रोक्तचरनामधेय: काश्मीरिसूरि: परिमिताक्षरां वेदान्तकौस्तुभप्रभानाम्नीं सुलभामिमां वृत्तिं मुकुन्दभट्टनियोगेन रचयाञ्चकार।

## निम्बार्कदर्शने वेदान्तकौस्तुभप्रभाया: वैशिष्ट्यम्-

अत्र कौस्तुभप्रभायां निम्बार्कदर्शनस्य सारभूतं तत्त्वं महत प्रयासेन विशिष्टै: तर्कै: प्रतिष्ठापितं। अत्र न केवलं निम्बार्काचार्याणां मतं प्रतिपादितं अपितु तस्य मतस्य दार्ढ्यार्थं अद्वैतवेदान्ते प्रसिद्धानां ग्रन्थानां विशेषत: तत्वप्रदीपिकाया: भामती ग्रन्थस्य च विवर्णस्यग्रन्थस्य च समीक्षा कृता। तदत्र किंच लेशेन उदाहरणार्थम् प्रदर्श्यते। तथाहि पूर्वं सुदर्शनावतारेण तत्रभवता निम्बार्काचार्येण भगवत्कृष्णावतारव्यासप्रणीतानां ब्रह्मसूत्राणां वाक्यार्थरूपेण वेदान्तपारिजातसौरभाख्य: सन्दर्भ: प्रणीत:।

य: किल निम्बार्काचार्योऽद्वैतवादस्थापनार्थं प्राततरारभ्य शास्त्रार्थं कुर्वाणाय सन्ध्या समये परास्ताय सन्ध्यां लक्षयित्वा पुन: पुन: प्रार्थ्यमानत्वेऽपि दिवाकरानवलोकनाद् भोजनमकुर्वते कस्मैचिन्मायावादियतये स्वसदनवर्तिनिम्बद्रुमे स्वप्रकाशं निधाय तमेवार्करूपेण प्रदर्श्य भुज्यतां सविश्रम्भं यतिवरं दिनमिदमिति यतिमतिमुद्भाव्य तं कृतभोजनं सुप्रसन्नं विसर्जयाञ्चकार, तत: प्रभृति निम्बार्क इत्यन्वर्थसंज्ञामवाप।

अथामुष्योक्तचरस्य वेदान्तपारिजातसौरभस्य शङ्खावतारेण ध्रुवसार्वज्ञतासम्पादयित्रा श्रीनिवासाचार्येण वेदान्तकौस्तुभसंज्ञं भाष्यरूपेण विशदितमप्यतिदुरूहार्थतया विदुषामपि दुष्प्रवेशमाकलय्य तत्र सौकर्येण प्रवेशाय प्रोक्तचरनामधेय: काश्मीरिसूरि: परिमिताक्षरां वेदान्तकौस्तुभप्रभनाम्नी सुलभामिमां वृत्ति मुकुन्दभट्टनियोगेन रचयाञ्चकार।

न केवलं अद्वैतमतस्यैव समीक्षा कृता अपितु क्वचिद् क्वचिदम् विशिष्टाद्वैतस्यापि समीक्षा कृता इति दृश्यते। कश्चित् त्वेतद्वाक्यमेवं व्याख्यायते, सत्यपदं निरुपाधिकसत्तायोगि ब्रह्माह। तेन विकारास्पदमचेतनं तत्संसृष्टश्चेतनश्च व्यावृत्त:।

नामान्तरभजनार्हावस्थान्तरयोगेन तयोर्निरुपाधिकसत्तायोगरहितत्वात्। ज्ञानपदं नित्यासङ्कुचितज्ञानैकाकारमाह। तेन कदाचित् सङ्कुचितज्ञानत्वेन मुक्ता व्यावृत्ताः। अनन्तपदं देशादिपरिच्छेदशून्यस्वरूपमाह। सगुणत्वात् स्वरूपस्य स्वरूपेण गुणैश्चानन्त्यम्। तेन पूर्वपदद्वयव्यावृत्तकोटिद्वयविलक्षणाः सातिशयस्वरूपगुणा नित्या व्यावृत्ता इति।

तन्न समीचीनमिति प्रतिभाति, तत्पदैस्तादृगर्थस्यालाभात्। सम्भवति मुख्यार्थे लक्षणाङ्गीकारस्य गौरवावहत्वात्। चिदचितोः सत्यत्वमङ्गीकृत्य पुनः सत्यपदेन तयोर्व्यावृत्त्यसम्भवाच्च, अन्यथापसिद्धान्तापत्तिः।

किञ्च, चिदचितोः सोपाधिकसत्यत्वाङ्गीकार उपाधिनिवृत्तौ तयोरसत्यत्वापत्तिः। तथात्वे च "सत्यं ह्येवेदं विश्वमसौ सृजते, सत्यस्य सत्यं प्राणा वै सत्यम्", तेषामेष सत्यम् इत्यादिश्रुतिव्याकोपः।

तदेवं सर्वत्र प्रत्यधिकरणे कौस्तुभप्रभायां आमूलचूणं अद्वैतमतस्य श्रीरामार्जुनमतस्य च समीक्षण पूर्वकं निम्बार्क मतस्य श्रुतिसम्मतत्त्वं समीचीनैः न्यायैः प्रतिष्ठापितं

अतः निम्बार्क दर्शनस्य स्फुटावलोकनं कौस्तुभप्रभायाः दर्शनेन विना कथमपि न सम्भवत इति निश्चप्रचं वक्तुं शक्यते। अतः निम्बार्क दर्शन साहित्ये कौस्तुभप्रभाया स्थानम् उज्ज्वलं चकास्ति।

**प्रभाकाराणामितिवृत्तम्-**

श्रीकेशवकाश्मीरिभट्टः वेदान्तकौस्तुभप्रभाकार इति ग्रन्थकाराणां नामश्रवणेनैव इदं वक्तुं शक्यते एते काश्मीरप्रदेशेन सम्बद्धा इति।

ऐतिहासिकैः एते तैलङ्गब्राह्मणाः एतेषां पितृचरणाः श्रीमङ्गल नाम्ना प्रसिद्धाः आसन्। एतेषां ज्येष्ठभ्राता श्री अनन्तः आसीत्। एतेषां गुरुचरणाः श्रीमुकुन्दाः आसन् इति मङ्गलाचरण श्लोकेन ज्ञायते।

**श्रीमुकुन्दं गुरुं नत्वा पूर्वाचार्योक्तवर्त्मना।**

**ब्रह्मसूत्राणि संक्षेपाद् विव्रियन्ते स्वतुष्टये॥**

कौस्तुभप्रभा इति अयं ग्रन्थः एतेषां वैदुष्य प्रदर्शने अलमिति वक्तुं शक्यते एते आचार्याः पदवाक्यप्रमाणपारावारिणाः इति कौस्तुभप्रभा एव सम्यक् बोधयति। एतेषां ग्रन्थाः प्रायः एकादशसंख्याकाः प्रसिद्धाः ।

१. वेदान्तकौस्तुभप्रभा

२. क्रमदीपिका

३. तत्त्वप्रकाशिका

४. श्रीगोविन्दशरणागतिस्तोत्र

५. यामुनस्तोत्र

६. केनोपनिषद् (द्वैतपरकव्याख्या)

७. मुण्डक उपनिषद् (द्वैतपरकव्याख्या)

८. तत्त्वप्रकाशिका (वेदस्तुतिव्याख्या)

९. कृष्णतत्त्व प्रकाशिका (ब्रह्मोपनिषट्टीका)

१०. विष्णुनामार्थदर्श (विष्णुसहस्रनामटीका)

११. तैत्तिरीयप्रकाशिका

इति।

# प्रथमोऽध्यायः

## वेदान्त कौस्तुभप्रभायाः प्रथमोऽध्यायस्य समीक्षात्मकः

### ❖ प्रथमपादस्य वेदान्तकौस्तुभप्रभायाः समीक्षात्मकः प्रथमखण्डः

वेदान्तकौस्तुभप्रभायां प्रथमोऽध्यायस्य प्रथमपादे एकादशाधिकरणानि सन्ति। तानि च

- **जिज्ञासाधिकरणम्**
- **जन्माद्याधिकरणम्**
- **शास्त्रयोनित्वाधिकरणम्**
- **समन्वयाधिकरणम्**
- **ईक्षत्यधिकरणम्**
- **आनन्दमयाधिकरणम्**
- **अन्तराधिकरणम्**
- **आकाशाधिकरणम्**
- **प्राणाधिकरणम्**
- **ज्योतिरधिकरणम्**
- **इन्द्रप्राणाधिकरणम्**

अत्र प्रथमपादे जिज्ञासाधिकरणं प्रथमम् अधिकरणम्। अस्मिन्नधिकरणे निम्बार्क दर्शनदिशा ब्रह्मणः जिज्ञास्यत्वं प्रतिपादितम्। श्रीमता निम्बार्काचार्याणां भाष्ये सङ्क्षेपतः सूत्राणां व्याख्या दृश्यते।

सम्प्रति प्रथमाधिकरणं विविच्यते।

तथाहि प्रथमसूत्रे आचार्यैः सूत्रस्याशय एवं वर्णितः-

**अथातो ब्रह्मजिज्ञासा**

अत्र एकमेव सूत्रम् अयमर्थ:

अथाधीतषडङ्गवदेन कर्मफलक्षयाक्षयत्वविषयकविवेकप्रकारकवाक्यार्थ-जन्यसंशयाविष्टेन, तत एव जिज्ञासितधर्ममीमांसाशास्त्रेण तन्निश्चितकर्मतत्प्रकार-तत्फलविषयकज्ञानवता, कर्मब्रह्मफलसातत्वसातिशयत्व- निरतिशयत्वविषयक-व्यवसायजातनिर्वेदेन, भगवत्प्रसादेप्सुना तद्दर्शनेच्छा लम्पटेनाचार्यैकदेवेन श्रीगुरुभक्त्येकहार्देन, मुमुक्षुणाऽनन्तापिन्त्यस्वाभाविकस्वरूपगुणाशक्त्यादिर्बृ- हत्तमो यो रमाकान्त: पुरुषोत्तमो ब्रह्मशब्दाभिधेयस्तद्विषयिका जिज्ञासा सततं सम्पादनीयेत्युपक्रमवाक्यार्थ:।

कौस्तुभेऽस्मिन्नधिकरणे अद्वैतमतस्य निराकरणपूर्वकमेवं वर्णनं कृतं दृश्यते। तथाहि-परमते तु जिज्ञास्यो दुरुपपाद:, विकल्पासहत्वात्। तथा हि, शुद्धो वा मायोपहितो वाऽज्ञानाध्यस्तेश्वरो वा जिज्ञासाविषयत्वेनाभिप्रेत:।

नाद्य:, तस्याविषयत्वाभ्युपगमात्, अन्यथा मिथ्यात्वप्रसङ्गात्। शुद्धं ब्रह्म मिथ्या, जिज्ञासाविषयत्वात्, तव मते घटादिवत्, अपसिद्धान्तापत्ते:। अविषयत्वाभ्युपगमसिद्धान्तभङ्गाच्च। न द्वितीय:, जिज्ञासया श्रवणाद्यभ्यासजन्योपहितसाक्षात्कारेण तद्विषयकाज्ञाननाशेऽपि शुद्धविषयकाज्ञानस्य तादवस्थ्येनानिर्मोक्षप्रसङ्गात्, अप्रयोजकत्वाच्च।

किञ्च, उपहितज्ञानं मोक्षहेतुर्न वा। नाद्य:, तस्यैव मुक्तोपसृप्यत्वप्रसक्त्या शुद्धाभ्युपगमस्य प्रयोजकत्वेन वैयर्थ्यात्। न द्वितीय:, जिज्ञासावैयर्थ्यापत्ते:। तदर्थकभाष्यादिशास्त्रप्रणयनस्य जलताडनसाम्यापत्तेश्च।

नाप्यध्यस्तजिज्ञास्याङ्गीकारस्तृतीय:, अध्यासस्य सपरिकरस्य निरस्यमानत्वात्।

तस्मात् स्वरूपगुणशक्त्यादिभिर्निरतिशयबृहत्तमो ब्रह्मशब्दवाच्यो भगवान् वासुदेवः श्रीकृष्ण एव जिज्ञास्य इत्युक्तम्।

बृंहति बृंहयति तस्मादुच्यते परं ब्रह्म। बृंहन्तो गुणा अस्मिन्निति ब्रह्म्।

"एष प्रकृतिरव्यक्तः कर्ता चैव सनातनः।

परं च सर्वभूतेभ्यस्तस्माद्बृहत्तमोऽच्युतः"॥[7]

इत्यादिश्रुतिस्मृतिभ्यः। श्रुत्यर्थनिर्णायकस्यास्य सूत्रस्योपोद्घातरूपत्वाच्छस्त्रारम्भहेत्वनुबन्धा अप्यनेन निरूपिताः। ते त्वधिकारिविषयसम्बन्धप्रयोजनाख्याः। तत्र श्रेयस्कामो मुमुक्षुरत्राधिकारी। विषयश्चास्य ब्रह्मशब्दाभिधेयः सर्वज्ञः स्वाभाविकाचिन्त्यानन्तयावदात्मवृत्तिशक्तिगुणाद्याश्रयो ब्रह्मरुद्रेन्द्रप्रकृतिपरमाणुकालकर्मस्वभावादिनियन्ता दोषास्पृष्टसीमा चिदचित्स्वाभाविकभिन्नत्वाश्रयो भगवान् वासुदेवः श्रीपुरुषोत्तमः।

परमते तु विषयस्य दुर्निरूपत्वेन शास्त्ररम्भोऽसम्भव एव, विकल्पासहत्वात्। तथा हि, तन्मते जीवब्रह्मौक्यं विषयः। तच्चैक्यमध्यस्तमनध्यस्तं वा। नाद्यः, अध्यस्तस्यावश्यं बाध्यत्वेन भेदस्य तात्त्विकत्वापत्तेः। द्वितीये, ऐक्यस्य ब्रह्मभिन्नत्वेन भेदस्तदवस्थ एव।

नन्वैक्यस्य ब्रह्मभेदो नाभ्युपगम्यत इति चेन्न, ऐक्यस्य निर्विशेषब्रह्माभिन्नत्वे तत्त्वपदार्थपराणां "सत्यं ज्ञानमनन्तम्"[8] "विज्ञानमानन्दम्"[9] इत्यादीनामैक्यपरमहावाक्यैक्यस्वभाववैयर्थ्यापत्तेः। न चैक्यस्य स्वप्रकशब्रह्माभिन्नत्वेन स्थितिप्रवृत्यादौ

[7] - महाभारत

[8] - तैत्तिरीय आरण्यक २.१.१६॥

[9] - वृहदारण्यक् ३.९.२८॥

निरपेक्षत्वेऽपि लक्षितार्थभेदभ्रमनिवर्तकवृत्तिजनने पदार्थसापेक्षत्वेन स्वरूपपरवाक्यानामेकवाक्यतायाः सत्त्वाद् भेदरूपप्रतियोगिसापेक्षत्वेन तत्र सापेक्षत्वेन स्वरूपपरवाक्यानामेकवाक्यतायाः सत्त्वाद् भेदरूपप्रतियोगिसापेक्षत्वासम्भवात्। अभावसादृश्यादेः सप्रतियोगिकत्ववदैक्यस्य सापेक्षतायाः स्वाभाविकत्वात्। एतेन मन्मतेऽविनिवृत्ताद्वैतयोः सापेक्षयोरपि ब्रह्मैक्यमस्तु। तत्राभावत्वसापेक्षत्वादेर्मायिकत्वेन विरोधाभावात्। तव तु सापेक्षत्वनिरपेक्षत्वयोस्तात्विकत्वेन विरोधस्य दुष्परिहरत्वादिति निरस्तम्। त्वदभिमताद्वैतश्रुतिबोधस्याभावत्वादेः कल्पितत्वायोगात्। अन्यथा श्रुतेरप्रामाण्यापत्त्या द्वैतनिवृत्त्यादेरसिद्ध्यापत्तेः। ज्ञानस्य ज्ञानत्वेन दण्डादेः करणत्वेनाभावसादृश्येच्छादेस्तत्त्वेन सापेक्षत्वेऽपि प्रमेयत्वदण्डत्वादिना निरपेक्षत्वनिरपे-क्षत्वाङ्गीकार इति संक्षेपः। विस्तरस्त्वाकरे द्रष्टव्यः।

प्रतिपद्यप्रतिपादकभावलक्षणः सम्बन्धः। परमते तु विषयाभावे सम्बन्धानुपपत्तिरेव। श्रीभगवद्भावापत्तिलक्षणो मोक्षोऽत्र प्रयोजनम्।

मद्भक्त एतद्विज्ञाय मद्भावायोपपद्यते।

बहवो ज्ञानतपसा पूता मद्भावमागताः॥[10]

इति श्रीमुखोक्तेः। भावपदं च स्वयमेव मम साधर्म्यमागताः। इति श्रीमुखेन

इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः।[11] इति श्लोकेन।

---

[10] - गीता १३/१८॥

[11] - गीता १३/०२॥

स एव साम्यसायुज्यब्रह्मामृतमहिमादिशब्दैरभिधीयते, "निरञ्जन: परमं साम्यमुपैति"[12] "नारायणे सायुज्यमाप्नोति"[13] "ब्रह्मविद् ब्रह्मैव भवति"[14] "जुष्टस्ततस्तेनामृतत्वमेति" "तन्महिमानमेति वीतशोक:"[15] "इत्यादिश्रुतिभ्य:।

परमते प्रयोजनं दुर्निरूपम्, असम्भवात्। तथा हि, ब्रह्मभावापत्तिलक्षणो मोक्ष: प्रयोजनत्वेनाभ्युपगम्यते तस्य चेतनस्यैकत्वमनेकत्वं वा? नाद्य:, चैत्रमैत्रादीनां सुखादिभोगसांकर्यप्रसङ्गात्। न चौपाधिकभेदस्य तन्नियामकत्वान्नोक्तदोषावकाश इति वाच्यम्, हस्तपादाद्युपाधिभेदेऽप्यनुसन्धानदर्शनात्। न चान्त:करणभेदोऽविद्याभेदो वा तन्नियामक इति वाच्यम्, चैतन्यैक्यै चक्षुरादिभेदवदन्त:करणभेदस्याप्यप्रयोजकत्वात्।

नन्वन्त:करणभेदस्याप्रयोजकत्वेऽपि तदैक्याध्यासापन्नान्त:करणभेदस्याननुसन्धाने प्रयोजकताङ्गीकारान्नोक्तदोषयोग इति चेन्न, निर्विशेषस्वप्रकाशे ज्ञाताज्ञातविभागहीने चेतनेऽन्त:करणादेस्तादात्म्यारोपासम्भवात्। उपरिष्टादध्यासस्य निराकरिष्ये।

किञ्च, अनेकाविद्यासम्बन्धस्य दु:खाद्यनुसन्धानरूपस्यानर्थस्य च चिशिष्टवृत्तित्वं शुद्धगतत्वं वा? नाद्य:, बन्धमोक्षयोर्वैयधिकरण्यात्। अन्त्ये च यच्छुद्धं चैत्रीयदु:खानुसन्धातृ तदेव मैत्रीयदु:खानुसन्धात्रिति सांकर्यं तदवस्थम्।

नन्वविद्यानिवृत्तिरूपबन्धनिवृत्त्यात्मकमोक्षस्य शुद्धगतत्वेऽपि दु:खाद्यनुसन्धातृत्वस्यो-पहितगतत्वान्न शुद्धे तदापादकत्वमिति चेन्न, दु:खाद्यनुसन्धानतूपानर्थस्योपहितनिष्ठत्वेन बन्धमोक्षवैयधिकरण्यस्य तादवस्थ्यात्, बद्धस्य निवृत्तिरेव न तु मोक्ष इत्यापत्तेश्च।

---

12 - मुण्डक ३/१/३॥
13 - नारा० उप० ५ ॥
14 - मुण्ड० ३/२९॥
15 - श्वेताश्वर ४/७॥

ननूपाधेः कल्पितत्वान्निवृत्तावप्युपधेयस्याकल्पितत्वेन निवृत्त्ययोगान्मोक्षान्वयित्वमिति चेन्न्, शुद्धभिन्नतया भवदभिमतस्य विशिष्टस्य मृषात्वेन तत्र मोक्षान्वयासम्भवात्।

ननु दुःखाद्यनुसन्धानमुपहितगतमप्यविद्यारूपबन्धस्य शुद्धवृत्तित्वात् तत्रैव मोक्ष इति तयोर्वैयधिकरण्याभाव इति चेन्न, दुःखाद्यनुभवद्वारेणैवाविद्याया अनर्थत्वात्। यत्र दुःखाद्यनुसन्धानं स एव बद्धः, तस्यैव मोक्षौचित्यात्। नाप्यविद्यावच्छिन्नद्वारावस्थात्रयातीते शुद्धेऽप्यनुसन्धानमिष्टमिति वाच्यम्, दुःखानुसन्धातुरवस्थात्रयातीतत्वासम्भवात्।

अथ चोपहितस्योपाधिकृतत्वेनोपाधेः शुद्धगत्वमेव वक्तव्यम्। तथात्वे च किमेकैकोपाध्यपगमे मोक्ष उत सर्वोपाध्यपगमे। आद्ये, सदा मुक्तिरेव न तु बन्ध इत्यापातात्। द्वितीये, अधुना बन्ध एव, न कस्यापि मुक्तिरित्यङ्गीकृतं स्यात्।

न च जीवानामनेकत्वाद् येनोपाधिना यस्य परिच्छिन्नत्वं तस्मिंश्चेतने तदुपाध्यपगमेन मोक्ष इति वाच्यम्, विकल्पासहत्वात्। तथा हि, जीवनानात्ववादे चेतनभेदो वास्तव औपाधिको वा। आद्ये, अद्वैतवादो दत्ततिलाञ्जलिः स्यात्, तवानङ्गीकाराच्च, अस्मत्पक्षप्रवेशाच्च। द्वितीये, एकोपाधिविनिर्मुक्तस्यापि शुद्धस्योपाध्यन्तरावच्छिन्नत्वेन कदापि मुक्तेरसम्भवात्। भग्नोपाधेश्चेतनस्योपाध्यन्तरोपहितेभ्यो भिन्नत्वाभावात्।

ननु मा भूदनेकजीववादे मुक्तेः सामञ्जस्यम। एकजीववादे तु सर्वोपाध्यपगमान्मोक्ष इति चेन्न, शुकादिमोक्षविधायकशास्त्रस्य बाधापत्त्या तन्मतस्यैवाप्रामाणिकत्वात्, दुःखाद्यनुसन्धानस्याव्यवस्थापत्तेश्च।

किञ्च उपाधिरेकदेशेन सम्बद्धः कृत्स्नेन वा। आद्ये, त्वन्मते स्वाभाविकांशाभावेनौपाधिकत्वमेव वाच्यम्, तथात्वे चानवस्थाप्रसङ्गः। अन्त्ये न भेदकता, कृत्स्नस्यैकोपाधिनैव ग्रस्तत्वात्।

न च सर्वविकल्पासहत्वेन मिथ्याभूतस्यैवोपाधिर्मित्याभेदप्रयोजकत्वमिति वाच्यम्, उत्तरास्फूर्तौ प्रधानविकल्पे विकल्पाद्यसहत्वमिति सांख्यबौद्धाभ्यामपि वक्तव्यत्वेन तन्निरासासम्भवात्। मृषाभूतस्यापि व्यावहारिकस्य त्वया व्यवस्थाङ्गीकारात्। अन्यथा जीवजडयोर्विश्वकर्तृत्वान्तर्यामित्वादिकं निरस्येश्वरे तत् समर्थयतः समन्वयाध्यायस्योच्छेदापत्तेः। तव मते परमेश्वरकर्तृत्वस्यापि व्यावहारिकत्वात्।

तस्माद्बद्धमुक्तदुःखाद्यनुसन्धानानुपपत्त्या चितो वास्तवो भेदोऽवश्यमभ्युपगन्तव्य इति सिद्धं भेदस्यापि पारमार्थिकत्वम्।

ननु बन्धमोक्षादिव्यवस्थायाः स्वप्नवद्यावद्विद्यमुपपद्यमानत्वमेवेति चेन्न, तस्मिन्नेकस्मिन्नपि सुप्ते सर्वजगदप्रतीत्यापत्तेः।

ननु समष्ट्यभिमानिनोऽस्वापा[16]न्नोक्तदोष इति चेन्न, सृष्टिमारभ्याप्रलयमप्रसुप्तत्वस्य जीवेऽसम्भवात्। जीवैक्याङ्गीकारेऽहं त्वमयमिति प्रत्यक्त्वपराक्त्वप्रत्ययानामुच्छेदापत्तेश्च। नहि देवदत्तस्य त्वमिति धीविषयस्याहमिति धीविषयत्वं युक्तमित्यर्थः।

ननु नायं दोषः, भिन्नान्तःकरणाभेदाध्यासेन तत्तदन्तःकरणमादायाहंत्वमादिप्रत्ययाना सविषयत्वव्यवस्थोपपत्तेरिति चेन्न, योगिनः कायव्यूहे नानान्तःकरणतादात्म्यारोपेऽप्यहमित्येव प्रतीतेः। न च

तत्रान्तःकरणस्यैकत्वमेवेति वाच्यम्, बाह्यक्रणानामप्यैक्यापत्या कायव्यूहस्यैवासम्भवात्।

किञ्च त्वन्मत एकस्या एव चितः सर्वान्तःकरणैरभेदाध्यासेन चैत्रस्य शुक्तिसाक्षात्कारेण रूप्यभ्रमनिवृत्तावन्येषामपि तन्निवृत्त्यापत्तिः, अन्तःकरणस्य भोगाद्यव्यवस्थापकत्वात्। अन्यथा योगिकायव्यूहे देहोऽपि भोगाद् भेदकः स्यात्।

अथ चैक एव जीवः सर्वकल्पकः। तेनैव सर्वमिदं कल्पितमिति चेन्न जीवस्य कारणतां निषिध्य परमेश्वरकारणत्वबोधकानां श्रुतीनां बाधापत्तेः। सार्वज्ञ्यबोधकश्रुतीनां निर्विषयत्वापत्तेश्च। जीवभिन्नेशाभावाज्जीवे सार्वज्ञ्यस्यानुभवविरोधाच्च।

न च समष्ट्यभिमानिनो जीवस्यैव सार्वज्ञ्यादियोगोऽभ्युपगम्यत इति वाच्यम्, लोके जीवत्वेव प्रसिद्धेषु सार्वज्ञ्यादेः प्रत्यक्षादिना बाधितत्वात्। प्रसिद्धभिन्नस्य सार्वज्ञ्यस्वीकारे तस्यैवेश्वरत्वेनेष्टापत्तेरिति संक्षेपः।

द्वितीये चेतनानेकत्वपक्षे तद्भेदस्यौपाधिकत्व उक्तदोषाणां योगः।

किञ्च औपाधिकभेदाङ्गीकार उपाधिगमनकाले तदवच्छिन्नस्य कौटस्थ्याद् गत्यभावेन पदे पदे बन्धमोक्षौ स्याताम्। अनादिवद्धस्याकस्मात् साधनं विनैव मोक्षः कूटस्थनित्यशुद्धबुद्धमुक्तस्वभावस्याकस्मान्निष्कारणमेव बन्ध इत्यर्थः। कृतनाशाकृताभ्यागमप्रसङ्गश्च। स्वाभाविकत्वे चास्मत्पक्षप्रवेशोऽद्वैतभङ्गश्च।

ननु मा भूदुपाध्यवच्छिन्नस्योक्तदोषकदम्बाज्जीवत्वम् किन्तु चेतनप्रतिबिम्ब एव जीवः तस्याविद्याया अन्तःकरणस्य चोपाधेः कल्पितत्वेन तन्नाशे जीवब्रह्मैक्यसिद्धिरिति चेन्न, प्रतिबिम्बभाव उपाधेर्बिम्बस्य च सावयवत्वरूपवत्त्वप्रमाणविशयत्वादीनां तत्कारणानामभावात्।

तथा हि बिम्बरूपो रूपी प्रत्यक्षविषयोऽवयववान् वा, नीरूपः प्रमाणाविषयो निरवयवो वा। नाद्यः अनङ्गीकारात्। अन्यथा निर्विशेषाद्वितीयवादभङ्गापत्तेः। न द्वितीयः असम्भवात्। नीरूपस्य च रूपस्य प्रत्यक्षगोचरस्वाश्रयद्रव्यविशिष्टस्यैव सावयवे प्रत्यक्षगोचर एव द्रव्ये प्रतिबिम्बभावापत्तिदर्शनान्न केवलस्य। अतो न तत्र व्यभिचारः शङ्कनीयः।

न चाकाशस्य निरवयवनीरू पस्यापि प्रतिबिम्बदर्शनाद्व्यभिचार इति वाच्यम्, पञ्चीकृतस्याकाशस्य सावयवत्वरूपित्वचाक्षुषत्वादीनां सत्त्वेन प्रतिबिम्बनस्याविरुद्धत्वात्। अपञ्चीकृतस्य केवलस्य तु प्रत्यक्षगोचरत्वाभावेन प्रतिबिम्बकल्पनाया अप्रामाण्यात्। अन्यथा कालधर्मादीनां शब्दस्पर्शादौ वायुपिशाचादीनां चाक्षुषाणां कालादौ प्रतिबिम्बनापत्तेः। तच्च दृष्टिश्रुत्यगोचरत्वादनुपपन्नम्।

किञ्च सूर्यचन्द्रादिप्रभामण्डलयुक्तस्यैवाकाशस्य प्रतिबिम्बभावापत्तिः न केवलस्य। अन्यथान्धकारेऽपि तद्दर्शनापत्तिः। अतो न तत्र व्यभिचारावकाशः।

किञ्च उपाधिसम्बन्धो जीवे स्वाभाविक औपाधिको वा। नाद्यः त्वन्मतेऽनिर्मोक्षप्रसङ्गात्। न द्वितीयः अनवस्थानात् अन्योन्याश्रयाच्च।

न चोपाधिरेव स्वसम्बन्धहेतुरिति वाच्यम् आत्माश्रयात्। वस्तुतस्तु बिम्बसमसत्ताक एवोपाधौ लोके प्रतिबिम्बदर्शनात् प्रकृतेऽविद्याद्युपाधीनां ब्रह्मसमसत्ताकत्वाभावान्नेष्टसिद्धिः। अन्यथा मृगमरीचिकाजलेऽपि सूर्यादिप्रतिबिम्बदर्शनापत्तिः।

न च दर्पणस्थनेत्रप्रतिफलितमुखादिदर्शने व्यभिचारः। सोपाधिकारोपे दृष्टस्य स्वबाध्यौपाधिकत्वस्य तत्रासत्त्वेन नेत्रदेशावच्छेदेन तन्मुखप्रतिफलनमित्यङ्गीकारात्।

तत्राप्युभयोः प्रतिबिम्बयोः प्रतिबिम्बभावेन स्थितत्वेऽपि बिम्बसमसत्ताकोपाध्युपहितत्वस्य नियामकत्वान्न व्यभिचार इत्यर्थः।

किञ्च उपाधेर्बिम्बान्यदेशावस्थान एव प्रतिबिम्बभावो न त्वेकत्रैव। प्रकृते तदभावादिष्टासिद्धिः।

अयं भावः उपाधिर्ब्रह्मैकदेशवृत्तिर्व्याप्यवृत्तिर्ब्रह्म? नाद्यः ब्रह्मणः सदेशत्वापत्तेर्निर्विशेषत्वहानिः। द्वितीये सर्वस्याप्युपाधिमत्त्वे प्रतिबिम्बनासिद्धिः सुतरां शुद्धहानिश्च। इतरथा जलनिमग्नानामपि जलौकसां प्रतिबिम्बो दृश्यते। न तु तदस्ति, तथा प्रकृतेऽपि बोध्यम्।

तस्माद्बिम्बप्रतिबिम्बवज्जीवब्रह्मौक्यं वक्तुमेवाशक्यत्वात् सर्वथाप्यनुपपन्नमिति सिद्धम्।

किञ्च "आचार्यवान् पुरुषो वेद" इति श्रुतेरेकजीववादे ह्युपदेष्टव्यादन्यस्य चेतनस्याभावादुपदेष्टुरभावे तत्त्वज्ञानासम्भवः। तस्मिंश्च मोक्षासम्भवः। न च कल्पितस्योपदेष्ट्रत्वम्। शास्त्रोक्तलक्षणलक्षितस्यैव तथात्वश्रवणात्। "स गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्"[17] इति श्रुतेः

न च स्वाप्नस्य गुरोरिविपदेष्ट्रत्वेऽपि क्षत्यभावेन तथात्वोपपत्तिरिति वाच्यम्, स्वाप्नस्य गुरोरज्ञाननिवर्तकत्वादर्शनात्। अन्यथा "यदेव भगवान् वेद तदेव मे ब्रूहि"[18] इति श्रुतेः "उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः"[19] इति स्मृतेश्च व्याकोपात्। किञ्च उपदेष्टुर्गुरोर्निश्चिताद्वैतवत्त्वं न वा। नाद्यः अद्वैतज्ञानवतः पुंसो

---

17 - मुण्ड० १/२/१२॥
18 - वृहदारण्यक् ४/५/११
19 - गीता ४/३४॥

द्वैतदर्शनात्मकशास्त्रप्रणयनासम्भवात्। द्वितीये प्रतारकत्वापत्ते: अन्धपरम्परान्यायापत्तेश्च।

किञ्च अनादिसंसारे कस्यचित् तत्त्वज्ञानं मुक्तिश्चाभून्न वा आद्ये जीवस्यैकत्वेनेदानीं संसारानुपलब्धिप्रसङ्ग:। द्वितेरेये शुकादीनां यदि मिक्तिर्नासीत् तर्हि ममापि न भविष्यतीति शङ्कया वेदान्तश्रवणादौ प्रवृत्यनुपपत्ति:।

न च शास्त्रप्रामाण्यदार्ढ्यात् प्रवृत्त्युपपत्तिरिति वाच्यम् चेच्छ्रुतिप्रामाण्यदार्ढ्यादेव सदा सिद्धो जीवभेद: श्रुतिप्रमित: केषाञ्चिन्मोक्षश्च कुतो नाङ्गीक्रियते। "यो यो देवानां प्रत्यबुध्यत स एव तदभवत् तथर्षीणां तथा मनुष्याणाम्"[20] "अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्य:"[21] "नित्यो नित्यानाम्"[22] इत्यादिश्रुतिभ्य:।

अतीतानागताश्चैव यावन्त: सहिता: क्षणा:।

ततोऽप्यनन्तगुणिता जीवानां राशय: पृथक्॥

इत्यादिस्मृतिभ्यश्च। तस्मात् तन्मते मोक्षस्य स्वरूपत्वेन सदैव स्वत एव प्राप्तत्वाद्बन्धस्य चाविद्यकत्वेन मृगतृष्णाकल्पितोदकेनेव तेन स्पर्शासम्भवात् शास्त्रप्रणयनस्य श्लेष्मविलोडनमात्रत्वेन सुतरां वैयर्थ्यम्। शुद्धस्य नित्यमुक्तत्वाद् बद्धस्य च तुच्छत्वात् कस्य मुक्तये प्रयासविशेष:। मुमुक्षोरेवासिद्धे:। तस्मात् प्रयोजनासिद्धे: शास्त्रारम्भो व्यर्थ एव।

---

20 - वृहदा० १/४/१०

21 - श्वेताश्व० ४/५

22 - कठोपनिषद् ५/१३॥

न च स्वरूपस्य नित्यप्राप्तत्वेऽपि कण्ठस्थस्य नित्यप्राप्तस्य विस्मृतस्य मणेरुपदेशवदुपदेश: सार्थक इति वाच्यम् मण्युपदेशस्य सुखं दु:खाद्यभावश्च फलम्। न च त्वन्मते स्वरूपाभिन्नं प्राप्यं किञ्चिदस्ति स्वप्रकाशात्मकस्य नित्यप्राप्तत्वात्।

किञ्च मणे: स्वल्पपदार्थस्य देहैकदेशवृत्तित्वेन विस्मृत्यर्हत्वं भवेत्। आत्मनस्तु सर्वगतत्वेन स्वरूपत्वेन च तत्तासम्भवाद् दृष्टान्तस्यात्यन्तवैषम्यमेवेति संक्षेप:।

एतेनाधिकार्युपपत्तिरपि निरस्ता। प्रयोजनाभावेऽर्थित्वाभाव:। तदभावे च सामर्थ्यविद्वत्त्वयोरकिञ्चित्करत्वादप्रयोजकत्वमिति।

अत्र तत्त्वप्रदीपिकादिग्रन्थेऽद्वैतमतस्य यदुपपादनं कृतम्, तस्यापि युक्त्या निरासपूर्वकमाचार्यै: निम्बार्क वेदान्तदिशा परब्रह्मण: श्रीकृष्णस्य जिज्ञास्यत्वं साधितम्।

इति जिज्ञासाधिकरणम्।

तदनु तल्लक्षणजिज्ञासायां द्वितीयसूत्रं प्रवर्तते।

## प्रथमोऽध्यायस्य प्रथमपादस्य जन्माद्यधिकरणम्-

**जन्माद्यस्य यतः।**

इति सूत्रम् तल्लक्षणापेक्षायां सिद्धान्तमाहात्स्याऽचिन्त्यविचित्रसंस्थान-सम्पन्नस्यासंख्येयनामरूपादिविशेषाश्रयस्याचिन्त्यरूपस्य विश्वस्य सृष्टिस्थितिलया यस्मात् सर्वज्ञाद्यनन्तगुणाश्रयाद् ब्रह्मेशकालादिनियन्तुर्भगवतो भवन्ति, तदेव पूर्वोक्तनिर्वचनविषयं ब्रह्मेति लक्षणवाक्यार्थः।

अस्मिन्नधिकरणे प्रभाकारैः परमतनिराकरणपुरस्सरं सूत्रस्यास्य ब्रह्मलक्षणपरतया व्याख्यातं दृश्यते। तदित्थम्-

अस्येति शब्दः कार्यपरः यत इति कारणपरः जन्म आदिर्यस्य एतदिदं जन्मादिसृष्टिस्थितिलयमोक्षम्, तदगुणसंविज्ञानो बहुव्रीहिः लम्बकर्णमानयेतिवत् यतो यस्मात् सर्वेश्वरात् सर्वज्ञात् सर्वशक्तेः परमकारणात् सर्वनियन्तुर्भगवतः श्रीपुरुषोत्तमादस्य जगतो नामरूपाभ्यां व्याकृतस्य विविधविभक्तभोक्तृसंयुक्तस्य नियतदेशकालफलोपभोगाश्रयभूतस्य तर्कागोचररचनस्य जन्मस्थितिलयमिक्षाः प्रवर्तन्ते तदेव ब्रह्म जिज्ञास्यमिति वाक्यार्थः यत्तदोर्नित्यसम्बन्धात्। “भृगुर्वै वारुणिर्वरुणं पितरमुपससार अधीहि भगवो ब्रह्म”[23] इत्युपक्रम्य “यतो वा इमानि भूतानि जायन्ते, येन जातानि जीवन्ति, यत् प्रयन्त्यभिसंविशंन्ति, तद्विजिज्ञासस्व, तद् ब्रह्म”[24] “सत्यं ज्ञानमनन्तं ब्रह्म”[25] इत्यादिश्रुतेर्जगदभिन्ननिमित्तोपादानत्वे सति सत्यत्वादिमत्त्वं ब्रह्मलक्षणम्।

---

23 - तैत्तिरीय० ३/१॥

24 - तैत्तिरीय० ३/१/१॥

25 - तैत्तिरीय० आ० २/१/१६॥

न चोपादानाभिन्ननिमित्तस्य कारणत्वं कुत्रापि न दृश्यत इति वाच्यम् घटेशसंयोगजीवगतज्ञानादावीशजीवयोस्तथा दर्शनात्। ब्रह्म ज़गदभिन्ननिमित्तोपादानं भवितुमर्हति तादृशशक्तिमत्त्वात्

जीवगतज्ञानादिकार्ये जीववत् घटेश्वरसंयोगादिकार्य ईश्वरवत् इत्यनुमानात्। परमते तु लक्षणमसम्भवि पूर्ववद्विकल्पासहत्वात्।

ननु लक्षणं द्विविधम् स्वरूपतटस्थभेदात्। तत्र स्वरूपाभिन्नं लक्षणं प्रथमम् यथा "सत्यं ज्ञानम्"[26] इत्यादिकम्। यावल्लाक्ष्यमनवस्थितत्वे सति व्यावर्तकं तटस्थलक्षणम् यथा "यतो वा इमानि"[27] इत्यादि। श्रुत्युक्तकारणत्वस्य प्रलयेऽननुगतत्वे सतीतरव्यावर्तकत्वाल्लक्षणसमन्वय इति चेत् नैवम् असम्भवात्।

तथाहि न तावत् स्वरूपलक्षणोक्तिरुपपत्तिमती। असाधारणधर्मस्यैव सर्वसम्मतलक्षणत्वान्न स्वरूपमात्रस्य। अन्यथा स्वरूपस्यैव व्यावर्तकत्वे लक्षणत्वेनोक्तेरेव वैयर्थ्यात् स्वरूपस्य व्यावर्तकत्वादर्शनाच्च।

एवं द्वितीयसूत्रेण ब्रह्मण निर्दुष्टे लक्षणे प्रतिपादिते तृतीयसूत्रं ब्रह्मणि शास्त्रमेव प्रमाणमिति निरूपयति। अत्र शाङ्करभाष्ये वर्णद्वयमस्ति। परन्तु निम्बार्कदर्शन भाष्ये कौस्तुभप्रभायाञ्च एकमेव वर्णकं दृश्यते।

इति जन्माद्यधिकरणम्।

---

[26] - तैत्तिरीय० आ० २/१/१६॥

[27] - तैत्तिरीय ३/१/१॥

## प्रथमोऽध्यायस्य प्रथमपादस्य शास्त्रयोनित्यत्वाधिकरणम्

- शास्त्रयोनित्यत्वादिति

**शास्त्रयोनित्यत्वादिति** इति-

अत्र किं प्रमाणकमित्याकांक्शायां सिद्धान्तमाह शास्त्रमेव योनिस्तज्ज्ञप्ति कारणं यस्मिस्तदेवोक्तलक्षणलक्षितं वस्तु ब्रह्मशब्दाभिधेयमिति।

एवं लक्षणप्रमाणाभ्यां ब्रह्मतत्वे निश्चिते पूर्वमीमांसामतनिरासार्थं सिद्धे वस्तुन्यपि व्युत्पत्ति प्रतिपादनार्थं चतुर्थमधिकरणमेकरणमेकसूत्रात्मकं प्रवर्तते।

इति शास्त्रयोनित्यत्वाधिकरणम्।

## प्रथमोऽध्यायस्य प्रथमपादस्य समन्वयाधिकरणम्-

तत्तु समन्वयादिति

अयमाशय:-

"तु" शब्द आशङ्कानिरासार्थ:। तस्मिन ब्रह्मणि सर्वस्य वेदस्य सम्यग्वाच्यतया अन्वयस्तस्मात् शास्त्रैकवेद्यम् उक्तलक्षणं ब्रह्मैव जिज्ञास्यमिति चतुर्थेऽधिकरणे निर्णीतम्।

ननु समस्तस्यापि वेदस्य क्रियापरत्वेन तद्भिन्निविषयकाणां वेदान्तवाक्यानामप्यर्थवादवाक्यानां तत्प्राशस्त्यप्रतिपादनद्वारा परम्परया, विधिवाक्यैकवाक्यतावत् क्रत्वङ्गकर्तृप्राशस्त्यप्रतिपादनेन विध्येकपरत्वात् कथमिव शास्त्रैकप्रमाणकं ब्रह्मेति प्राप्ते, सिद्धान्त:, तज्जिज्ञास्यं विश्वकारणं शास्त्रप्रमाणकं ब्रह्मैव न कर्मादि, तत्रैव प्रतिपादकतया कृत्स्नस्यापि वेदस्य समन्वयात् मुख्यवृत्याऽन्वय:। यद्वा

वेदेषु तस्यैव प्रतिपादकतया समन्वयादितिसंक्षेपः। न च कर्मणि तत्समन्वयो वक्तुं शक्यः, तस्य तु विविदिषोत्पादनेनैव नैराकाङ्क्ष्यात् क्रत्वङ्गं ब्रह्मेति तु बालभाषितम्। तस्य सर्वकर्मकर्त्रादिकारकनियन्तृत्वेन स्वातन्त्र्यात्, तत्फलदातृत्वाच्च। प्रस्तुत कर्मण एव विविदिषोत्पादनेन परम्परया तत्प्राप्तिसाधनीभूत ज्ञानोत्पत्त्युपकारकत्वेन समन्वय इति निश्चीयते विविदिषा श्रुतेः। ननु प्रत्यक्षज्ञादिप्रमाणविषयकत्ववच्छब्दप्रमाणाविषयत्वस्यापि श्रुतिसिद्धत्वान्न शास्त्रैकप्रमेयं ब्रह्मेतिप्राप्ते, ब्रूमः जिज्ञास्यं ब्रह्मशास्त्रप्रमाणकमेव, नान्यप्रमाणकम्, समस्तश्रुतीनां साक्षात्परम्परया वा तत्रैव समन्वयात्। तत्र लक्षणप्रमाणादिवाक्यानां स्वतः एव तद्विषयकत्वेन, शाण्डिल्यपञ्चाग्निमधुविद्यादिवाक्यानां प्रतीकादिप्रकारकाणां च परम्परया समन्वयः। यद्वा सर्वेषामपि वाक्यानां भिन्नप्रवृत्तिनिमित्तकत्वेऽपि साक्षादेव ब्रह्मणि समन्वयः, तत्त्वाक्यविषयाणां सर्वेषामपि ब्रह्मात्मकत्वाविशेषेण मुख्यवाक्यत्वात्। न चैवं विषयनिषेधपराणां बाधः शङ्कनीयस्तेषां ब्रह्मस्वरूपगुणादिविषयकेयत्तानिषेधपरत्वेन समविषयत्वात्। किञ्चात्र प्रष्टव्यो भवान् "शब्दाऽविषयं ब्रह्मे" ति वाक्यस्य वाच्यं ब्रह्माभिप्रेतं न वेति? आद्ये वाच्यत्वसिद्धेरवाच्यत्वप्रतिज्ञाभङ्गः, द्वितीये सुतरां वाच्यतेति। तस्मात् सर्वज्ञः सर्वाचिन्त्यशक्तिविश्वजन्मादिहेतुर्वेदैकप्रमाणगम्यः सर्वभिन्नाभिन्नो भगवान् वासुदेवो विश्वात्मैव जिज्ञासाविषयस्तत्रैव सर्वं शास्त्रं समन्वेतीत्यौपनिषदानां सिद्धान्तः।

इति समन्वयाधिकरणम्।

एवं चतुर्भिः अधिकरणैः निम्बार्कदर्शनानुसारेण श्रीकृष्णस्येव जिज्ञास्यत्वं सप्रमाणं प्रतिपाद्य एतदमतस्य एव श्रौतत्त्वोपपादनार्थं मतान्तराणां सांख्यादीनां निराकरणार्थम् ईक्ष्यत्यधिकरणं प्रवृत्तम्।

अत्र कौस्तुभप्रभायां अयं विशेषः अद्वैतमते अधिकरणमिदं न सङ्गच्छते इति प्रतिपादनमपि युक्त्याकृतम्।

**प्रथमोऽध्यायस्य प्रथमपादस्य ईक्षत्यधिकरणम्-**

- ईक्षतेर्नाशब्दम्
- गौणश्चेन्नात्मशब्दात्
- तन्निष्ठस्य मोक्षोपदेशात्
- हेयत्वावचनाच्च
- प्रतिज्ञाविरोधात्
- स्वाप्ययात्
- गतिसामान्यात्
- श्रुतत्वाच्च

ईक्षत्यधिकरणे सप्तसूत्राणि सन्ति च तानि-

**ईक्षतेर्नाशब्दमिति**

अनेन सूत्रेणेदं प्रतिपाद्यते सांख्याभिमतचेतनं प्रधानं तु अशब्दं श्रुतिप्रमाणवर्जितम्, अतो नैव जगत्कारणम्, जगत्कर्तुश्चेतनधर्मस्येक्षस्य श्रवणात्।

**गौणश्चेन्नात्मशब्दात्** इति।

गौणापीक्षतिरयुक्ता, कुतः? आत्मशब्दात्।

**तन्निष्ठस्य मोक्षोपदेशात्** इति।

सदीक्षित्रात्मादिपदार्थभूतकारणनिष्ठस्य विदुषस्तद्भावापत्तिलक्षणमोक्षोपदेशान्न प्रधानं सत्यात्मशब्दवाच्यम्।

**हेयत्वावचनाच्च** इति।

सर्वज्ञेन हितैषिणा सदादिशब्दैरुपदिष्टस्याचेतनस्य मोक्षे हेयस्य हेयत्वमवश्यं वक्तव्यमुपदेशेऽप्रयोजनञ्च वक्तव्यम्, तदुभयवचनाभावान्न सदादिपदवाच्यं प्रधानम्।

**प्रतिज्ञाविरोधात्** इति।

किञ्चैकविज्ञानात् सर्वविज्ञानप्रतिज्ञाविरोधादपि नाचेतनकारणवाद: साधु:।

**स्वाप्ययादिति** इति।

सच्छब्दार्थं जगत्कारणं प्रकृत्य स्वप्नान्तरमेव सौम्य विजानीह्रीति यत्रैतत् पुरुष: स्वपिति नाम सता सौम्य तदा सम्पन्नो भवती त्यादिनोक्तस्यार्थस्याचेतनकारणावगतेरसम्भवात् ब्रह्मैव जगत् कारणं युक्ततम्।

**गतिसामान्यात्** इति।

अत्र सर्वेषु वेदान्तेषु चेतनकारणवर्णतेस्तुल्यत्वात् अचेतनकारणवादो न हि युक्त: इति निर्णीतम्।

**श्रुतत्वाच्च** इति।

तस्मात् सदादिशब्दाभिधेयस्य सर्वज्ञस्य सर्वनियन्तु: सर्वेश्वरस्य चेतनत्वेन कारणत्वस्य श्रुतत्वान्न प्रधानग्रह:।

इति ईक्ष्यत्यधिकरणम्।

**प्रथमोऽध्यायस्य प्रथमपादस्य आनन्दमयाधिकरणम्-**

- आनन्दमयोऽभ्यासात्
- विकारशब्दान्नेति चेन्न प्राचुर्यात्
- तद्धेतुव्यपदेशाच्च
- मान्त्रवर्णिकमेव च गीयते
- नेतरोऽनुपपत्तेर्विद्वत्प्राप्यत्वात्
- भेदव्यपदेशाच्च
- कामाच्च नानुमानापेक्षा
- अस्मिन्नस्य च तद्योगं शास्ति

इत्यानन्दमयाधिकरणे अष्टसूत्राणि सन्ति च तानि-

**आनन्दमयोऽभ्यासात्** इति।

आनन्दमयः परमात्मेव न तु जीवः, कुतः? परमात्मविषयकानन्दपदाभ्यासात्।

**विकारशब्दान्नेति चेन्न, प्राचुर्यात्** इति।

विकारार्थे मयट् श्रवणान्नानन्दमयः परमात्मेति चेन्न, कस्मात्? प्राचुर्यार्थकस्यापि मयटः स्मरणात्।

**तद्धेतुव्यपदेशाच्च** इति।

जीवानन्दहेतुत्वादपि परमात्मैवानन्दमयः।

**मान्त्रवर्णिकमेव च गीयते** इति।

"सत्यं ज्ञानमनन्तं ब्रह्मेति[28] मन्त्रप्रोक्तं मान्त्रवर्णिकं तदेवानन्दशब्देन गीयते।

**नेतरोऽनुपपत्तेः** इति।

आनन्दमयपदार्थमुद्दिश्य श्रूयमाणानां तदसाधारणधर्मणां तदितरस्मिन्ननुपपत्तेरितरो जीवो नानन्दमयपदार्थः।

**भेदव्यपदेशाच्च** इति।

"रसं ह्येवायं लब्धवानन्दी भवति"[29] ति वाक्येन लब्धृलब्धव्ययोर्भेदव्यपदेशाज्जीवो नानन्दमयः।

**कामाच्च नानुमानापेक्षा** इति।

प्रत्यगात्मनः कारणत्वस्वीकारे, अनुमानस्य प्रधानस्य करणादिरूपस्यापेक्षा भवेत्, कुलालादेर्घटादिजनने मृदाद्यपेक्षावत्, अप्राकृतस्यानन्दमयस्य सर्वशक्तेः पुरुषोत्तमस्य तु न कुतः? कामात् सङ्कल्पादेव "सोऽकामयत बहुस्याम्"[30] इत्यादि श्रुतेः। अतस्तद्भिन्न आनन्दमयः।

**अस्मिन्नस्य च तद्योगं शास्ति** इति।

तद्योगमानन्दयोगं शास्ति श्रुतिः रसो वै सः रस हेवायं लब्ध्वानन्दी भवति ति जीवस्य यल्लाभादानन्दयोगः स तस्मादन्य इति सिद्धम्।

इति आनन्दमयाधिकरणम्।

---

28 - तै० आ० २/१/१६॥

29 - तै० २/७॥

30 - तै० उ० २/६॥

**प्रथमोऽध्यायस्य प्रथमपादस्य अन्तराधिकरणम्-**

- अन्तस्तद्धर्मोपदेशात्
- भेदव्यपदेशाच्चान्य:

इत्यानन्तराधिकरणे द्वे सूत्रे स्त:।

**अन्तस्तद्धर्मोपदेशात्** इति।

आदित्याऽक्ष्णोरन्तरस्थो मुमुक्षध्येयो हि परमात्मैव, न तु जीवविशेष:, कुतस्तस्यैवापदृतपाप्मत्वसर्वात्मत्वादीनां धर्माणामुपदेशात्।

**भेदव्यपदेशाच्चान्य:** इति।

आदित्यादिजीववर्गादन्योऽस्ति परमात्मा कुत:? "आदित्येतिष्वन्नि" त्यादिना भेदव्यपदेशात्।

इति अन्तराधिकरणम्।

**प्रथमोऽध्यायस्य प्रथमपादस्य आकाशाधिकरणम्-**

- आकाशस्तल्लिङ्गात्

इत्यस्मिनधिकरणे एकमेव सूत्रमस्ति।

**आकाशस्तल्लिङ्गात्** इति।

"अस्य लोकस्य का गतिरित्याकाश इति होवाचे"[31] त्यत्राकाशशब्दवाच्य: परमात्मा कुत:? सर्वाणि हि वा इमानि भूतान्याकाशादेवोत्पद्यन्ते" इति सर्वत्रष्टत्वादि तल्लिङ्गात् इति निर्णीतम्।

इति आकाशाधिकरणम्

**प्रथमोऽध्यायस्य प्रथमपादस्य प्राणाधिकरणम्-**

- अतएव प्राण:

इत्यस्मिन्नधिकरणे एकमेव सूत्रमस्ति।

**अतएव प्राण:** इति।

"सर्वाणि ह वा इमानि भूतानि प्राणमेव संविशन्ति प्राणमभ्युज्जिहते"[32] इत्यत्रापि संवेशनोद्गमनरूपाद्ब्रह्मलिङ्गात् परमात्मैव प्राण: इति निर्णीतम्।

इति प्राणाधिकरणम्

**प्रथमोऽध्यायस्य प्रथमपादस्य ज्योतिरधिकरणम्-**

- ज्योतिश्चरणाभिधानात्
- छन्दोऽभिधानान्नेति चेन्न तथा चेतोऽर्पणनिगदात् तथाहि दर्शनम्
- भूतादिपादव्यपदेशोपपत्तेश्चैवम्
- उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात्

इत्यस्मिनधिकरणे चतुर्थसूत्राणि सन्ति।

---

[31] - छा० उ० १९/१॥

[32] - छा० उ० १/११॥

**ज्योतिश्चरणाभिधानात्** इति।

"दिवो ज्योतिरिति" ज्योतिर्ब्रह्मैव, "पादोऽस्य सर्वभूतानि" ति चरणाभिधानात्

**छन्दोऽभिधानान्नेति चेन्न तथा चेतोऽर्पणनिगदात्तथाहि दर्शनम्** इति।

पूर्ववाक्ये गायत्र्याख्यछन्दोऽभिधानात् तत्परा चरणश्रुतिरस्तु, न ब्रह्मपरेति चेन्न, गुणयोगात् गायत्रीशब्दाभिधेयो भगवति चेतोऽर्पणाभिधानात् दृष्टश्च विराट्शब्दः प्रकृतपरः।

**भूतादिपदव्यपदेशोपपत्तेश्चैवम्** इति।

न केवलं तथा चेतोऽर्पणनिगदाद्गायत्री ब्रह्मेत्युच्यते, भूतपृथिवीशरीरहृदयानां ब्रह्मणि भगवत्युपपत्तेश्चैवम्।

**उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात्** इति।

पूर्वमधिकरणत्वेन पुनरवधित्वेन "त्रिपादस्यामृतं दिवि" इत्यत्र सप्तमीविभक्त्या अधिकरणत्वेन पुनरपि "अतः परोदिवोज्योतिर्दीप्यते" इत्यत्र पञ्चम्या विभक्त्या अवधित्वेन द्यौर्निर्द्दिश्यते इत्युपदेशभेदान्न ब्रह्म प्रत्यभिज्ञायते इति न कुतः? उभयत्रापि ब्रह्मण एकत्वस्याविरोधात् इति विवेचितम्।

**प्रथमोऽध्यायस्य प्रथमपादस्य इन्द्रप्राणाधिकरणम्-**

- प्राणस्तथानुगमात्
- न वक्तुरात्मोपदेशादिति चेदध्यात्मसम्बन्धभूमा ह्यस्मिन्
- शास्त्रदृष्ट्या तूपदेशो वामदेववत्
- जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात्

इत्यस्मिनधिकरणे चतुर्थसूत्राणि सन्ति।

**प्राणस्तथानुगमात्** इति।

प्राणोऽस्मीत्यादिवाक्ये प्राणादिशब्दवाच्य: परमात्मा हिततमत्वानन्तत्वादिधर्माणां परमात्मपरिग्रहेऽवगमात्।

**न वक्तुरात्मोपदेशादिति चेदध्यात्मसम्बन्धभूमा ह्यस्मिन्** इति।

प्राणादिशब्दवाच्यं ब्रह्म न भवति, कुत:? "मामेव विजानीहि" इति वक्तृस्वरूपाभिन्नोपदेशादिति चेत् यदि आशङ्क्यते. सा अनुपपन्ना कुत:? अस्मिन् प्रकरणे परमात्मसम्बन्धस्य बाहुल्यमस्त्यत: प्राणेन्द्रादिपदार्थ परमात्मैव इति विवेचितम्।

**शास्त्रदृष्ट्या तूपदेशो वामदेववत्** इति।

इन्द्रो हि सर्वस्य ब्रह्मात्मकत्वमवधार्य मामेव विजानीहि इति शास्त्रदृष्ट्या युक्तमुक्तवान्। तत्र क: शोक: को मोह एकत्वमनुपश्यत इत्यादि शास्त्रम् यथा अहं मनुरभवं सूर्यश्च इति वामदेव उक्तवान तद्वत् इति निर्णितम्।

**जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात्** इति।

न वाचं विजिज्ञासीत। वक्तारं विद्यात् त्रिशीर्षाणं त्वाष्ट्रमहन्नित्यादि जीवलिङ्गात् प्राण एव प्रज्ञात्मेदं शरीरं परिगृह्योत्थापयती ति मुख्यप्राणलिङ्गाच्च नात्र ब्रह्मपरिग्रह इति चेन्न उपासकतारतम्येन ब्रह्मोपासनायास्त्रैविद्याज्जीववर्गान्तर्य्यामित्वेन प्राणाद्यचेतनान्तर्यामित्वेन तदुभयविलक्षणेन चान्यत्राश्रितत्वादिहापि तद्योगात्। न ब्रह्मवाक्येऽपि जीवमुख्यप्राणलिङ्गं विरुध्यते। कथम्? उपासनात्रैविध्यात्, त्रिविधमिह ब्रह्मण

उपासनं विवक्षितम् प्राणधर्मेण प्रज्ञाधर्मेण स्वधर्मेण च। तत्रायुरसमृतमित्युपास्व आयुः प्राण इति इदं शरीरं परिगृह्योत्थापयति तस्मादेतदेवोक्थमुपासीत इति च प्राणधर्मः। प्रज्ञया चं समारुह्य वाचा सर्वाणि नामान्याप्नोति इत्यादिः प्रज्ञाधर्मः। स एष प्राण एव प्रज्ञात्मा इत्यादिर्ब्रह्मधर्मः। तस्माद्ब्रह्मण एवैतदुपाधिद्वयधर्मेण स्वधर्मेण चैकमुपासनं त्रिविधं विवक्षितम्। अन्यत्रापि मनोमयः प्राणशरीर इत्यादावुपाधिधर्मेण ब्रह्मण उपसनमाश्रितम्। इहापि तद्योज्यते। वाक्यस्योपक्रमोपसंहाराभ्यामेकार्थत्वागमात् प्राणप्रज्ञाब्रह्मलिङ्गावगमाच्च। तस्माद्ब्रह्मवाक्यमेतदिति सिद्धम्।

"सत्यं ज्ञानमनन्तं ब्रह्म[33], आनन्दो ब्रह्मेति स्वरूपेण उपास्यत्वम्। तत्सृष्ट्वा तदेवानुप्राविशत्, तदनुप्रविश्य सच्चत्यच्चाभवत् निरुक्तं चानिरुक्तञ्च निलयनञ्चानिलयनञ्च विज्ञानञ्चाविज्ञानञ्चेत्यादिषु चिदचिदन्तरात्मतया च तस्योपास्यत्वम् इति न्यरूपि।

तदेवं वेदान्तकौस्तुभप्रभामनुसृत्य प्रथमोऽध्यायस्य प्रथमपादस्य अधिकरणानामधिकरणे प्रतिपादितानां सूत्राणामर्थः विवेचितः।

---

[33] - तैत्तिरीय आ० २/१/१६॥

## ❖ द्वितीयपादस्य वेदान्तकौस्तुभप्रभाया: समीक्षात्मक: द्वितीय: खण्ड:-

वेदान्तकौस्तुभप्रभायां प्रथमोऽध्यायस्य द्वितीयपादे सप्ताधिकरणानि सन्ति एवं त्रयस्त्रिंशत् सूत्राणि सन्ति।

अधिकरणानि चैतानि सन्ति-

- **सर्वत्रप्रसिद्ध्यधिकरणम्**
- **अत्रधिकरणम्**
- **गुहाप्रविष्टाधिकरणम्**
- **अन्तराधिकरणम्**
- **अन्तर्याम्यधिकरणम्**
- **अदृश्यत्वादिगुणाधिकरणम्**
- **वैश्वानरराधिकरणम्**

### प्रथमोऽध्यायस्य द्वितीयपादे सर्वत्रप्रसिद्ध्यधिकरणम्-

सम्प्रति प्रथममधिकरणं सर्वत्रप्रसिद्ध्याधिकरणम् कौस्तुभप्रभाग्रन्थरीत्या विविच्यते-

एवं प्रथमपादे श्रद्धोपपत्तिपूर्वकगुरूपपत्त्यादिना जातसंसारमोक्षोच्छावत्तया ब्रह्मजिज्ञासायां प्रवृत्तं प्रति लक्षणप्रमाणे निरूप्य प्रधानपुरुषावेव जगत्कारणतया वेदान्तप्रतिपाद्याविव्याशङ्क्य सर्वज्ञसत्यसङ्कल्पस्वभावतोऽपास्तदोषदिव्यानन्तकल्याणगुणाकरस्य प्रब्रह्मण: श्रीकृष्णस्यैव जगत्कारणतया वेदान्तप्रतिपाद्यत्वमुक्तम्। अथ

कानिचिदस्पष्टजीवलिङ्गकानि कानिचित् स्पष्टजीवलिङ्गकानि च यानि वाक्यानि, तान्यपि ब्रह्मपराण्येवेति निर्णेतुं द्वितीयतृतीयपादावारभ्येते।

- सर्वत्र प्रसिद्धोपदेशात्
- विवक्षितगुणोपपत्तेश्च
- अनुपपत्तेस्तु न शारीरः
- कर्मकर्तृव्यपदेशाच्च
- शब्दविशेषात्
- स्मृतेश्च
- अर्भकौकस्त्वात् तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवच्च
- सम्भोगप्राप्तिरिति चेन्न वैशेष्यात्

इत्यस्मिनधिकरणे अष्टसूत्राणि सन्ति।

**सर्वत्र प्रसिद्धोपदेशात्** इति।

इदमाम्नायते छान्दोगैः "सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीताथ खलु क्रतुमयोऽयं पुरुषो यथा क्रतुरस्मिंल्लोके पुरुषो भवति तथेतः प्रेत्य भवति स क्रतुं कुर्वीत मनोमयः प्राणशरीरो भारूपः"[34] इत्यादि। अत्र मनोमयत्वादिगुणकः क्षेत्रज्ञ उपास्यत्वेनोपदिश्यते, उत परं ब्रह्मेति संशयः। किं तावत् प्राप्तं क्षेत्रज्ञ इति। कुतः? तस्यैव मनःप्राणोपकरणकत्वात्। न ब्रह्मणः "अप्राणो ह्यमनाः शुभ्र"[35] इत्यादिश्रुतेः।

ननु "सर्वं खल्विदं ब्रह्म"[36] इति पूर्वत्र श्रवणात् श्रुतिश्च लिङ्गाद्बलीयसीति पूर्वोक्तं ब्रह्मैवात्रोपास्यतया सम्बन्ध्यतामिति चेन्न, तद्वाक्यस्य "शान्त उपासीत" इति

---

34 - छान्दोग्य ३/१४/१॥

35 - मुण्डक २/१/१२॥

36 - छान्दोग्य ३/१४/१

हृदयायतनत्वाणीयस्त्वयो: परिच्छिन्ने जीव एव सम्भवादिति प्राप्ते कृतान्त:। मनोमयत्वादिगुणक: परमात्मैवात्रोपास्य:। कुत:? सर्तवत्र वेदान्तेषु परब्रह्मणि प्रसिद्धानां मनोमयत्वादीनामुपदेशात्। "मनोमय: प्राणशरीरनेता स एषोऽन्तर्हृदय आकाशस्तस्मिन्नयं पुरुषो मनोमय"[37] इत्यादिषु। तत्र मनोमयत्वं विशुद्धमनोग्रह्यत्वम्, प्राणशरीरत्वं प्राणस्याधारत्वं नियन्तृत्वं च अप्राण: प्राणानधीनस्थिति:, अमना मनोऽनधीनज्ञान इत्यर्थ:। अथवा "सर्वं खल्विदं ब्रह्म तज्जलानेति शान्त उपासीत"[38] इति सर्वात्मकं ब्रह्म शान्त: सन्नुपासीतेत्युपासनं विधीयते "स क्रतुं कुर्वीत" इति पूर्वस्यैव मनोमयत्वादिगुणोपादानायानुवाद: सर्वात्मकं ब्रह्म मनोमयत्वादिगुणकमुपासीतेति वाक्यार्थ:। तत्र सर्वात्मत्वेन निर्दिष्टं ब्रह्म, क्षेत्रज्ञ: उत परमात्मेति। किं तावद्युक्तम्? क्षेत्रज्ञ इति। कुत:? तस्यैवानाद्यविद्यामूलकर्मनिमित्तकब्रह्मादिसर्वभावोपपत्ते:। परब्रह्मणस्तु सर्वज्ञत्वसर्वशक्तित्वापहतपाप्मत्वस्वभावतोऽपास्तसमस्तदोषत्वादियोन्न हेयाकारसर्वतादात्म्यमुपपद्यते। ब्रह्मशब्दोऽपि बृहत्त्वगुणयोगेन तत्र वर्तते। जगज्जन्मादेश्च कर्मनिमित्तत्वात् तद्धेतुत्वात् तद्धेतुत्वनिर्देशोऽपि तत्रोपपद्यते, इति प्राप्ते तत्राह सर्वत्र प्रसिद्धोपदेशात्। सर्वात्मत्वेन जगज्जन्मादिहेतुत्वेन च निर्दिष्टब्रह्मशब्दवाच्य: परमात्मैव। तस्मादेव सर्वत्र वेदान्तेषु जगज्जन्मादीनां प्रसिद्धतयोपदेशात्। "सोऽकामयात बहुस्यां प्रजायेय"[39] इति "इदं सर्वमसृजत"[40] इत्यादिषु सर्वान्तर्यामितया सर्वात्मत्वमपि परब्रह्मण एवोपपद्यते। न प्रतिशरीरं भिन्नानां जीवानाम् जगज्जन्मदेर्जीवकर्मनिमित्तत्वात्। स एव हेतुरित्यापि न परमेश्वरस्यैव जगद्धेतुत्वप्रसिद्धे:। अत: परमात्मैवात्र ब्रह्मशब्दवाच्य:।

---

37 - मुण्डक २/२/७॥

38 - छान्दोग्य ३/१४/१

39 - तैत्तिरीय २/६॥

40 - तैत्तिरीय २/६॥

अयमाशय:-

"सर्वं खल्विदं ब्रह्म तज्जलानीति शान्त उपासीत" इत्युपक्रम्य श्रूयते "मनोमय: प्राणशरीर इति"। अत्र मनोमयत्वेनोपास्य: सर्वकारणभूत: परमात्मा गृह्यते न प्रत्यगात्मा, कुत:? सर्वेषु वेदान्तेषु प्रसिद्धस्य परमात्मन एव पूर्वत्र सर्वं खल्विदं ब्रह्मोत्याद्युपदेशात्"

**विवक्षितगुणोपपत्तेश्च** इति।

"मनोमय: प्राणशरीरोभारूप: सत्यसंकल्प" इत्यादीनां विवक्षितानां मनोमयत्वसत्यसंकल्पत्वादीनां गुणानां ब्रह्मणयेवोपपत्तेश्च। ब्रह्मैवात्र गृह्यत इति भाव:।

**अनुपपत्तेस्तु न शारीर:** इति।

मनोमयत्वादिगुणक: पर एव, न जीवस्तस्मिन् मनोमयत्वसत्यसंकल्पत्वाद्यनुपपत्ते:।

**कर्मकर्तृव्यपदेशाच्च** इति।

इतोऽप्यत्र मनोमयादिपदवाच्यो न शरीर:। एतमित: प्रेत्य सम्भवितास्मीति कर्मकर्तृव्यपदेशात्।

**शब्दविशेषात्** इति।

मनोमयत्वादिगुणक: शरीरादन्य: परमात्मा "एष मे आत्मान्तर्हृदये" इति जीवपरमात्मनो: षष्ठीप्रथमान्तशब्दविशेषात्।

**स्मृतेश्च** इति।

"ईश्वर: सर्वभूतानां हृद्देशेऽर्जुन तिष्ठतीति स्मृतेश्च जीवपरमात्मनोर्भेदोऽस्ति।

**अर्भकौकस्त्वात् तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवच्च** इति।

"एष मे आत्मा हृदये" इत्यल्पायतनत्वात् अणीयान् ब्रीहेर्वा इत्यल्पत्वव्यपदेशाच्चात्र न ब्रह्मेति चेत् नैव तथात्वेन ब्रह्मण इहोपास्यत्वात् बृहतोऽल्पत्वन्तु गवाक्षव्योमवत् संगच्छते।

**सम्भोगप्राप्तिरिति चेन्न वैशेष्यात्** इति।

"सर्वहृदयसम्बन्धात् सुखदुःखसम्भोगप्राप्तिर्ब्रह्मणोऽपि जीवस्येवेति चेन्नायं दोषः स्वकृतकर्मफलभोक्तृत्वेनापहतपाप्मत्वेन च जीवब्रह्मणोऽत्यन्तविशेषात्"।

इति सर्वत्रप्रसिद्ध्यधिकरणम्।

**प्रथमोऽध्यायस्य द्वितीयपादे अत्रधिकरणम्-**

- अत्ता चराचरग्रहणात्
- प्रकरणाच्च

इत्यस्मिनधिकरणे द्विसूत्राणि सन्ति।

**अत्ता चराचरग्रहणात्**

"यस्य ब्रह्म च क्षत्रञ्च उभे भवत ओदनं मृत्युर्यस्योपसेचनं क इत्था वेद यत्र स" इत्यत्रात्ता श्रीपुरुषोत्तमः। कुत? मृत्यूपसेचनौदनस्य ब्रह्मक्षत्रोपलक्षितचराचरात्मकस्य विश्वस्य ग्रहणात्।

**प्रकरणाच्च्** इति।

अत्ता भगवान् पुरुषोत्तमः "महान्तं विभु" मिति तस्यैव प्रकृतत्वाच्च। इति विवेचितं।

इति अत्रधिकरणम्।

**प्रथमोऽध्यायस्य द्वितीयपादे गुहाप्रविष्टाधिकरणम्-**

- गुहां प्रविष्टावात्मानौ हि तद्दर्शनात्
- विशेषणाच्च

इत्यस्मिनधिकरणे द्वे सूत्रे स्त: च ते-

**गुहां प्रविष्टावात्मानौ हि तद्दर्शनात्** इति।

"ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टा" वित्यत्र गुहां प्रविष्टौ आत्मानौ हि चेतनौ हि जीवपरमात्मानौ बोध्यौ: कुतस्तद्दर्शनात्तयोरेवास्मिन् प्रकरणे गुहाप्रवेशव्यपदेशदर्शनात्। "तं दुर्दर्शं गूढमनुप्रविष्ट गुहाहितमिति परमात्मन: "या प्राणेन सम्भवत्यादितिर्देवतामयी गुहां प्रविश्य तिष्ठन्ती सा भूतेभिर्व्यजायते" ति जीवस्य।

**विशेषणाच्च** इति।

जीवपरयोरेवात्र गुहाप्रविष्टत्वेन परिग्रह: यतोऽस्मिन् प्रकरणे "ब्रह्मयज्ञं देवमीड्यं विदित्वा निचाय्येमां शान्तिमत्यन्तमेति" "य: सेतुरीजानाना" मित्यादिषु तयोरेवोपास्योपासकभावेन वेद्यत्ववेतृत्वादिना च विशेषितत्वाच्च इति निरूपितम्।

**प्रथमोऽध्यायस्य द्वितीयपादे अन्तराधिकरणम्-**

- अन्तर उपपत्ते:
- स्थानादिव्यपदेशाच्च
- सुखविशिष्टाभिधानादेव च
- अत एव च तद्ब्रह्म
- श्रुतोपनिषत्कगत्यभिधानाच्च
- अनवस्थितेरसम्भवाच्च नेतर:

इत्यस्मिनधिकरणे षट्सूत्राणिसन्ति।

**अन्तर उपपत्ते:** इति।

"य एषोऽन्तरक्षिणि पुरुषो दृश्यते" इत्यक्षिण्यन्तर: पुरुषोत्तम एव नान्य: कुत:? "एष आत्मेति होवाच एतदमृतमभयमेतद्ब्रह्मेति" "एतं संयद्वाम इत्याचक्षते" इत्यात्मत्वाभयत्वादीनां संयद्वामत्वादीनां च पुरुषोत्तमे एवोपपत्ते:।

**स्थानादिव्यपदेशाच्च** इति।

परमात्मनो "यश्चक्षुषि तिष्ठन्नि" त्यादिश्रुत्या स्थानादेर्व्यपदेशाच्चाक्षिपुरुष: स एव।

**सुखविशिष्टाभिधानादेव च** इति।

अक्षिगत: पर एव "कं ब्रह्म खं ब्रह्मेति सुखविशिष्टाभिधा-नाच्च।

**अत एव च तद्ब्रह्म** इति।

तत् कं ब्रह्मेति सुखविशिष्टं ब्रह्मैव कुत:? 'यद्वाव कं तदेव खं यदेव खं तदेव क मितिपरस्परवैशिष्ट्यप्रतिपादकवाक्यदेव च।

**श्रुतोपनिषत्कगत्यभिधानाच्च** इति।

श्रुतोपनिषद्येन तस्य श्रुतोपनिषत्कस्य या गतिर्देवयानाख्या अथोत्तरेण तपसा ब्रह्मचर्येण श्रद्धया विद्ययात्मानमन्विष्यादित्यमभिजायन्ते एतद्वै प्राणानामायतनमेतदमृतमभयमेतत्परायणमेतस्मान्न पुनरावर्त्तते इति श्रुत्यन्तरे प्रसिद्धा तस्य एवेह तेऽर्च्चिषमेवाभिसम्भवन्ती त्यादिना गतेरभिधानाच्चाक्ष्यन्तर: पुरुष: पुरुषोत्तम एव।

**अनवस्थितेरसम्भवाच्च नेतरः** इति।

अक्ष्यन्तरः परमात्मेतरो न भवति, कुतस्तदितरस्य तत्र नित्यमेनानवस्थितेरमृतत्वादेस्तत्रासम्भवाच्च।

इति अन्तराधिकरणम्

**प्रथमोऽध्यायस्य द्वितीयपादे अन्तर्याम्यधिकरणम्-**

- अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात्
- न च स्मार्तमेतद्धर्माभिलापात्
- शारीरश्चोभयेऽपि हि भेदेनैनमधीयते

इत्यस्मिनधिकरणे त्रीणि अधिकरणानि सन्ति।

**अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात्** इति।

"यः पृथिव्यां तिष्ठिन्नि" त्युपक्रम्यं "एष ते आत्माऽन्तर्यामी" ति पृथिव्याद्यधिदैवादिसर्वपर्यायेषु श्रूयमाणोऽन्तर्यामी परमात्मैव कुतस्तद्धर्मस्य सर्वनियन्तृत्वादेरिह व्यपदेशात्।

**न च स्मार्तमतद्धर्माभिलापात्** इति।

न च प्रधानमन्तर्याभिशब्दवाच्यं चेतनधर्माणां सर्वनियन्तृत्वसर्वद्रष्ट्रत्वादीनां चाभिलापात् इति निरूपितं।

**शारीरश्चोभयोऽपि हि भेदेनैनमधीयते** इति।

न च जीवोऽन्तर्यामी यतश्चैनमन्तर्यामिणो भेदेन "यो विज्ञाने तिष्ठन्नि" ति काण्वाः "य आत्मनी" ति माध्यंदिनाश्चोभयेऽप्यधीयते।

**प्रथमोऽध्यायस्य द्वितीयपादे अदृश्यत्वाधिगुणाधिकरणम्-**

- आदृश्यत्वादिगुणको धर्मोक्तेः
- विशेषणभेदव्यपदेशाभ्यां च नेतरौ
- रूपोपन्यासाच्च

इत्यस्मिनधिकरणे त्रीणिसूत्राणि सन्ति।

**अदृश्यत्वादिगुणको धर्मोक्तेः** इति।

अथर्वणिकैरुदाहृतः अदृश्यमित्यादिनाऽदृश्यत्वादिगुणकः परमात्मैव कुतः? यः सर्वज्ञः इत्यादिना तद्धर्मोक्तेः।

**विशेषणभेदव्यपदेशाभ्यां च नेतरौ** इति।

प्रधानजीवौ न भूतयोन्यक्षरपदवाच्यौ विशेषणभेदव्यपदेशाभ्यां सर्वगत मितिविशेषणव्यपदेशः अक्षरात्परतः पर इति भेदव्यपदेशश्च।

**रूपोपन्यासाच्च** इति।

अग्निमूर्धे त्यादिना परमात्मनो रूपोपन्यासाच्च नेतरौ इति निर्णितम्।

इति अदृश्यत्वाधिगुणाधिकरणम्

**प्रथमोऽध्यायस्य द्वितीयपादे वैश्वानराधिकरणम्-**

- वैश्वानरः साधारणशब्दविशेषात्
- स्मर्यमाणमनुमानं स्यादिति
- शब्दादिभ्योऽन्तः प्रतिष्ठानान्नेति चेन्न तथा दृष्ट्युपदेशादसम्भवात् पुरुषमभिधीयते
- अत एव न देवता भूतं च

- साक्षादप्यविरोधं जैमिनिः
- अभिव्यक्तेरित्याश्मरथ्यः
- अनुस्मृतेर्वादरिः
- सम्पत्तेरिति जैमिनिस्तथा हि दर्शयति
- आमनन्ति चैनमस्मिन्

इत्यस्मिनधिकरणे नव सूत्राणिसन्ति।

**वैश्वानरः साधारणशब्दविशेषात्** इति।

वैश्वानरः परमात्मैव यतोऽग्निब्रह्मसाधारणस्यापि वैश्वानरशब्दस्य ब्रह्मपरिग्रहे द्युमूर्द्धत्वाद्यवयव विधानेन विशेषावगमात्।

**स्मर्यमाणमनुमानं स्यादिति** इति।

परमात्मनो हि वैश्वानरत्वे यस्याग्निरास्यं द्यौर्मूर्द्धे त्यादि स्मृत्युक्तमपि रूपं निश्चायकं स्यात।

**शब्दादिभ्योऽन्तः प्रतिष्ठानान्नेति चेन्न तथा दृष्ट्युपदेशादसम्भवात् पुरुषमभिधीयते** इति।

जाठराग्नौ वैश्वानरशब्दस्य रूढत्वादग्नित्रेताविधानात् प्राणाहुत्याधारत्वसंकीर्त्तनादन्तः प्रतिष्ठानश्रवणाच्च न वैश्वानरः परमात्मा किन्तु जाठराग्निरिति चेन्न तथा तस्मिन् जाठरे परमेश्वरदृष्टेरुपदेशात् परमात्मापरिग्रहाभावे द्युमूर्द्धत्वाद्यसम्भवात् पुरुषत्वश्रवणाच्च वैश्वानरः परमात्मैव।

**अत एव न देवता भूतं च** इति।

उक्तहेतुभ्य एव न देवता भूतं च न गृह्यते वैश्वानरशब्देन।

**साक्षादप्यविरोधं जैमिनिः** इति।

विश्वश्चासौ नरश्च सर्वात्मा भगवान् वैश्वानर इति साक्षादुपाख्य इत्यविरोधं जैमिनिराचार्यो मन्यते।

**अभिव्यक्तेरित्याश्मरथ्यः** इति।

उपासकानामनन्यानामनुग्रहायानन्तोऽपि परमात्मा तत्तदनुरूपतया अभिव्यज्यते इति प्रादेशमात्रत्वमुपपद्यते इत्येवमभिव्यक्तेरित्याश्मरथ्योमुनिर्मन्यते।

**अनुस्मृतेर्वादरिः** इति।

मूर्द्धादिपादान्तदेहकल्पनमनुस्मृतेरनुस्मरणार्थमिति वादरिराचार्यो मन्यते।

**सम्पत्तेरिति जैमिनिस्तथा हि दर्शयति** इति

वैश्वानरोपासकेन क्रियमाणाया वैश्वानरविद्यांगभूतप्राणाहुतेरग्निहोत्रत्वसम्पत्त्यर्थं तेषामुरादीनां वेद्यादित्वकल्पनमिति जैमिनिराचार्यो मन्यते, "तथैवाथ य एतदेवं विद्वानग्निहोत्रं जुहोती" त्यादिश्रुतिर्दर्शयति।

**आमनन्ति चैनमस्मिन्** इति।

द्युमूर्द्धादिमन्तं वैश्वानरमस्मिन्नुपासकदेहे पुरुषविधमामनन्ति च।

तदित्थं वेदान्तकौस्तुभप्रभाग्रन्थमाश्रित्य द्वितीयपादस्य विषयजातं समीक्षितम्।

इति वैश्वानराधिकरणम्

**❖ तृतीयपादस्य वेदान्तकौस्तुभप्रभायाः समीक्षात्मकः तृतीयः खण्डः**

वेदान्तकौस्तुभप्रभायां प्रथमोऽध्यायस्य तृतीयपादे एकादशधिकरणानि सन्ति एवं चतुश्चत्वारिंशत् सूत्राणि सन्ति।

अधिकरणानि चैतानि सन्ति-

- **द्युभ्वाद्यधिकरणम्**
- **भूमाधिकरणम्**
- **अक्षराधिकरणम्**
- **ईक्षतिकर्माधिकरणम्**
- **दहराधिकरणम्**
- **प्रमिताधिकरणम्**
- **देवताधिकरणम्**
- **मध्वधिकरणम्**
- **अपशूद्राधिकरणम्**
- **प्रमिताधिकरणम्**
- **अर्थानतरत्वादिव्यपदेशाधिकरणम्**

**प्रथमोऽध्यायस्य तृतीयपादे द्युभ्वाद्यधिकरणम्-**

इत्यस्मिनधिकरणे सप्तसूत्राणि सन्ति च तानि-

- द्युभ्वाद्यायतनं स्वशब्दात्
- मुक्तोपसृप्यव्यपदेशाच्च
- नानुमानमतच्छब्दात्
- प्राणभृच्च
- भेदव्यपदेशात्

- प्रकरणात्
- स्थित्यदनाभ्यां च

**द्युभ्वाद्यायतनं स्वशब्दात्** इति।

"यस्मिन् द्यौ: पृथिवी चान्तरिक्षमोतं मन: सह प्राणैश्च सर्वैस्तमेवैकं जानथात्मान्या वाचो विमुञ्चथामृतस्यैष सेतु:"[41] इति मुण्डकवाक्ये यस्मिन्निति द्युभ्वाद्याधारत्वेन श्रूयमाण: किं प्रधानं वा जीवो वोत परं ब्रह्मेति सन्देहे प्रधानमिति पूर्व: पक्ष:। तस्य पूर्वविकारजातहेतुत्वेनायनत्वोपपत्ते:। सेतुरिति सावधित्वश्रवणात्। आत्मशब्दस्तु प्रधानस्य सत्त्वद्वारा पुरुषप्रीतिहेतुत्वात् तत्रोपचरित:। जीवो वा, मन आदीन्द्रियाधिकरणत्वश्रवणात्। "अरा इव रथनाभौ संहिता यत्र नाड्य: स एवान्तश्चरते बहुधा जायमान:"[42] इति परत्र नाडीसम्बन्धात्, जायमानत्वश्रवणाच्च। भोक्तृत्वेन भोग्यप्रपञ्चायतनत्वोपपत्ते:। इति परत्र नाडीसम्बन्धात् जायमानत्वश्रवणाच्च। भोक्तृत्वेन भोग्यप्रपञ्चायतनत्वोपपत्ते:। इति प्राप्ते ब्रूम:। द्युभुवावादी यस्य प्राणान्तस्य तस्यायतनमाश्रय: परमात्मैव। कुत:? स्वशब्दात् स्वस्य परमात्मनोऽसाधारणयोरात्मामृतसेतुशब्दयो: श्रवणात्। आप्नोतीत्यात्मा। सर्वनियन्तृत्वेन तस्य सर्व्यापकत्वात्। मोक्षप्रापकतया सेतुश्च। स एव सेतुरिव वा। नद्यादिसेतो: कूलोपलम्भकत्ववदस्य संसारपारभूतमोक्षोपलम्भकत्वात्। नाडीसम्बन्धस्य परमात्मन्यपि सम्भवात्। "सन्ततं च शिराभिस्तु लम्बत्याकाशसन्निभम्"[43] इत्यादिश्रुते:। "अजायमानो बहुधा व्यजायत"[44] "अजोऽपि सन्नव्ययात्मा"[45] इति श्रुतिस्मृतिभ्यां बहुधा जायमानत्वमपि स्वस्वभावमजहत एव

---

41 - मुण्डक २/२/५॥

42 -मुण्डक २/२/६॥

43 - महानारायणोपनिषद् ११/९॥

44 - यजुस्सं.३१/१६॥

45 - गीता ४/६॥

भक्तानुग्रहाय तस्य सम्भवति। तस्य सर्वाधारत्वान्मन आदिजीवोपकरणाधारत्वस्यापि तत्रैवोपपत्तेः।

इत्यद्यद्युभ्वाद्यधिकरणम्

**मुक्तोपसृप्यव्यपदेशाच्च** इति।

द्युभ्वाद्यायतनं ब्रह्मैव, कुतस्तदायतनस्यैव यदा पश्यः पश्यते रुक्मवर्ण मित्यादिमुक्तोपसृप्यव्यपदेशात्।

**नानुमानमतच्छब्दात्** इति

नानुमानगम्यं प्रधानं तदायतने तद्बोधकशब्दाभावात्।

**प्राणभृच्च** इति।

न प्राणभृदपि द्युभ्वाद्यायतनं कुतोऽतच्छब्दादेव इति।

**भेदव्यपदेशात्** इति।

किंच ज्ञातृज्ञेयभावे भेदव्यपदेशादपि द्युभ्वाद्यायतनं न प्राणभृत्।

**प्रकरणात्** इति।

परमात्मप्रकरणान्न द्युभ्वाद्यायतनत्वेन जीवपरिग्रहः।

**स्थित्यदनाभ्यां च** इति।

द्वा सुपर्णेत्यादिमन्त्रे परमात्मनोऽभोक्तृत्वेन स्थितेर्जीवस्याऽदनाच्च न जीवात्मा द्युभ्वाद्यायतनम्।

**प्रथमोऽध्यायस्य तृतीयपादे भूमाधिकरणम्-**

इत्यस्मिनधिकरणे द्वे सूत्रे स्तः च ते-

- भूमा सम्प्रसादादध्युपदेशात्
- धर्मोपपत्तेश्च

**भूमा सम्प्रसादादध्युपदेशात्** इति।

परमाचार्यैः श्रीकुमारैरस्मद्गुरवै श्रीमन्नारदायोपदिष्टो "भूमात्वेव विजिज्ञासितव्य"[46] इत्यत्र भूमा प्राणो न भवति किन्तु श्रीपुरुषोत्तमः कुतः? प्राणादुपरि भून्न उपदेशात्।

**धर्मोपपत्तेश्च** इति।

निरतिशयसुखरूपत्वामृतत्वस्वमहिमाप्रतिष्ठितत्वादीनां परमात्मन्येवोपपत्तेश्च भूमा परमात्मैव इति विवेचितं।

इति भूमाधिकरणम्।

**प्रथमोऽध्यायस्य तृतीयपादे अक्षराधिकरणम्-**

इत्यस्मिनधिकरणे त्रीणि सूत्राणिसन्ति तानि च-

- अक्षरमम्बरान्तधृतेः
- सा च प्रशासनात्
- अन्यभावव्यावृत्तेश्च

**अक्षरमम्बरान्तधृतेः** इति।

अक्षरं ब्रह्मः कुतः? कालत्रयवर्त्तिकार्याधारतया निर्दिष्टस्याकाशस्य धारणात्।

**सा च प्रशासनात्** इति।

46 -छान्दोग्योपनिषद्- ७.२३.१।

सा च धृति: पुरुषोत्तमस्यैव कुत:? "एतस्यै वाक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठत"[47] इत्याज्ञापयितृत्वश्रवणात्।

**अन्यभावव्यावृत्तेश्च** इति।

अत्र प्रधानस्य जीवस्य वाऽक्षरशब्देन ग्रहणं नास्ति परमेवाक्षरशब्दार्थ: कुत:? तद्वा एतदक्षरं गार्ग्यऽदृष्टं द्रष्ट्राश्रुतं श्रोतृ अमतं मन्तृ अविज्ञातं विज्ञातृ इत्यन्यभावव्यावृत्ते: इति निरुपितम्।

इति अक्षराधिकरणम्।

**प्रथमोऽध्यायस्य तृतीयपादे ईक्षतिकर्माधिकरणम्-**

इत्यस्मिनधिकरणे एकमेव सूत्रमस्ति

- ईक्षतिकर्मव्यपदेशात् स:

**ईक्षतिकर्मव्यपदेशात् स:** इति।

पुरिशयं पुरुषमीक्षते इतीक्षते: कर्म ब्रह्माण्डान्तर्गतो ब्रह्मलोकस्थ ब्रह्मा न भवति किन्तु स एव प्रकृतासाधारणाप्रकृतब्रह्मलोकेश: य: स परमात्मेक्षितिकर्म कुत:? यत्तच्छान्तमित्यादिना तर्द्धमाणां व्यपदेशात्।

इति ईक्षतिकर्माधिकरणम्।

---

[47] -वृहदारण्यकोपनिषद्- ३.८.९।

## प्रथमोऽध्यायस्य तृतीयपादे दहराधिकरणम्-

इत्यस्मिनधिकरणे दशसूत्राणि सन्ति।

- दहर उत्तरेभ्य:
- इतश्च दहराकाश: परमात्मा गतिशब्दाभ्यां तथा हि दृष्टं लिङ्गं च
- धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धे:
- प्रसिद्धेश्च
- इतरपरामर्शात् स इति चेन्नासम्भवात्
- उत्तराच्चेदाविर्भूतस्वरूपस्तु
- अन्यार्थश्च परामर्श:
- अल्पश्रुतेरिति चेत् तदुक्तम्
- अनुकृतेस्तस्य च
- अपि तु स्मर्यते

**दहर उत्तरेभ्य:** इति।

अस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाश इति श्रुत्या प्रोक्तो दहराकाश: परमात्मा भवितुमर्हति कुत:? उत्तरेभ्यो यावान् वाऽयमाकाशस्तावानसौ अन्तर्हृदय आकाश: उभेऽस्मिन् द्यावापृथिवी अन्तरेव समाहिते। एष आत्माऽपहतपाप्मा विजर इत्यादिभिर्वक्ष्यमाणा ये परमात्मासाधारणधर्मास्तेभ्यो हेतुभूतेभ्य:।

**इतश्च दहराकाश: परमात्मा गतिशब्दाभ्यां तथा हि दृष्टं लिङ्गं च** इति।

"सर्वा: प्रजा अहरहर्गच्छन्ती"- ति गति:। "ब्रह्मलोकमिति शब्दस्ताभ्यां दहर: पर इति निश्चीयते"। "सता सौम्य तदा सम्पन्नो भवती"-ति प्रत्यहं गमनं श्रुत्यन्तरे तथैव दृष्टम्; कर्मधारयसमास परिग्रहे ब्रह्मैव लिङ्गं शब्दसामर्थ्यञ्च।

**धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः** इति।

"स सेतुर्विधृतिरेषां लोकानां" विधारकत्वं दहरस्य परमात्मत्वे सङ्गच्छतेः अस्य च महिम्नो धृत्याख्येऽस्मिन् परमात्मन्येव "एतस्य वाऽक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः"[48] इति श्रुत्यन्तरे उपलब्धः।

**प्रसिद्धेश्च** इति।

"आकाशो ह वै नामरूपयोर्निर्विहिता सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते"[49] इति परमात्मन्यप्याकाशशब्दप्रसिद्धेश्च दहराकाशः परमात्मैव।

**इतरपरामर्शात् स इति चेन्नासम्भवात्** इति।

एष सम्प्रसादोऽस्माच्छरीरात् समुत्थाय इति दहरवाक्यमध्ये जीवस्यापि परामर्शाज्जीवोऽस्तु दहर इति चेन्न अपहतपाप्मत्वादीनां पूर्वोक्तानां जीवेऽसम्भवात्।

**उत्तराच्चेदाविर्भूतस्वरूपस्तु** इति।

उत्तराज्जीवपरात् प्रजापतिवाक्याज्जीवेऽप्यहतपाप्मत्वादिगुणाष्टकमवगम्यतेऽतः स एव दहराकाशोऽस्त्विवति चेदुच्यते पूर्वोक्तगुणयुक्तो नित्याविर्भूतस्वरूपः परमात्मा दहर आर्विभूतस्वरूपो जीवस्तु न।

**अन्यार्थश्च परामर्शः** इति।

जीवपरामर्शः परमात्मनो जीवस्वरूपाविर्भावहेतुत्वप्रदर्शनार्थः।

**अल्पश्रुतेरिति चेत् तदुक्तम्** इति।

अल्पश्रुतेर्न विभुरत्र ग्राह्य इति चेत्, तत् समाधानाय यद्वक्तव्यं तदुक्तं पुरस्तात्।

---

48 -वृहदारण्यकोपनिषद्- ३.८.९।

49 -छान्दोग्योपनिषद्- ८.१४.१।

**अनुकृतेस्तस्य च** इति।

तस्य नित्याविर्भूतस्वरूपस्य "तमेव भान्तमनुभाति सर्वम्"[50] इत्यनुकृतेश्चानुकर्त्ता जीवो नित्याविर्भूतस्वरूपो दहरो न भवितुमर्हति।

**अपि स्मर्यते** इति।

अपि च "मम साधर्म्यमागता"[51] इति स्मर्यते इति निरूपणम्।

इति ब्रह्मणो दहराकाशत्वनिरूपणाधिकरणम्।

**प्रथमोऽध्यायस्य तृतीयपादे प्रमिताधिकरणम्-**

इत्यस्मिनधिकरणे द्वि सूत्राणि सन्ति।

- शब्दादेव प्रमित:
- हृद्यपेक्षया तु मनुष्याधिकारत्वात्

**शब्दादेव प्रमित:** इति।

प्रमितोऽङ्गुष्ठपरिमाणक: पुरुषोत्तम एव "ईशानोभूतभव्यस्ये" तिशब्दात्।

**हृद्यपेक्षया तु मनुष्याधिकारत्वात्** इति।

उपासकहृद्यपेक्षयाङ्गुष्ठमात्रत्वमुपपद्यते। ननु जन्तुशरीरेषु हृदयस्यानियतपरिमाणत्वात्तदपेक्षयाऽपि तथात्वं कथमत्राह मनुष्याधिकारत्वात् इति निरूपणम्।

---

50 - कठोपनिषद्- ५.१५।

51 - गीता-१४.२।

**प्रथमोऽध्यायस्य तृतीयपादे देवताधिकरणम्-**

इत्यस्मिनधिकरणे पञ्चसूत्राणि सन्ति च तानि-

- तदुपर्यापि बादरायण: सम्भवात्
- विरोध: कर्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनात्
- शब्द इति चेन्नात: प्रभवात् प्रत्यक्षानुमानाभ्याम्
- अतएव नित्यत्वम्
- समाननामरूपत्वाच्चावृत्तावप्यविरोधो दर्शनात् स्मृतेश्च

**तदुपर्यापि बादरायण: सम्भवात्** इति।

तस्मिन् ब्रह्मोपासने मनुष्याणामुपरिष्टादपि, ये, देवादयो हि तेषामप्यधिकारोऽस्तीति भगवान् वादरायणो मन्यते।

**विरोध: कर्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनात्** इति-

शरीरं बिना ब्रह्मोपासनानुपपत्त्या तेषामवश्यं विग्रहवत्त्वमभ्युपगन्तव्यं, तथात्वे तु कर्मणि विरोधं इति चेन्नायं दोष: कुत:? एकस्याप्यनेकेषां देहानां युगपत् प्रतिपत्तेर्दर्शनात्।

**शब्द इति चेन्नात: प्रभवात् प्रत्यक्षानुमानाभ्याम्** इति-

देवादीनां विग्रहवत्त्वस्वीकारे तद्वाचिनि वैदिक शब्दे विरोध: स्यात्, अर्थोत्पत्ते: प्राग्विनाशान्तरं च निरर्थकत्वापत्तेरिति चेन्नायं विरोध:। अत: शब्दादेव नित्याकृतिवाचकात् प्रजापतिबुद्ध्युद्बोधकादर्थस्य प्रभवात् "वेदेन नामरूपे व्याकरोत्" "अनादिनिधना नित्य वागुत्सृष्टा स्वयम्भुवा। आदौ वेदमयी विद्या, यत: सर्वा: प्रवृत्तय:" इत्यादिश्रुतिस्मृतिभ्याम्।

**अत एव च नित्यत्वम्** इति-

प्रजापतेः सृष्टिः शब्दपूर्विकाऽतो हेतोर्वेदस्य नित्यत्वम् इति निरूपितं।

**समाननामरूपत्वाच्चावृत्तावप्यविरोधो दर्शनात् स्मृतेश्च** इति-

एवं प्राकृतसृष्टिसंहारात्मिकायामावृत्तावपि न विरोधः, कल्पादौ सृज्यमानस्य कल्पान्तरातीतेन पदार्थेन तुल्यनामरूपादिमत्त्वात्; "सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्" इति दर्शनात्, यथार्त्तावृतुलिङ्गानि नानारूपाणि पर्यये, दृश्यन्ते तानि तान्येव तथाभावा युगादिषु इति स्मृतेः।

**प्रथमोऽध्यायस्य तृतीयपादे मध्वधिकरणम्-**

इत्यस्मिनधिकरणे त्रीणि सूत्राणि सन्ति।

- मध्वादिष्वसम्भवादनधिकारं जैमिनिः
- ज्योतिषि भावाच्च
- भावं तु बादरायणोऽस्ति हि

**मध्वादिष्वसम्भवादनधिकारं जैमिनिः** इति-

उपास्योपासकत्वाऽसम्भवात् मध्वादिषु विद्यासु सूर्यादीनामनधिकार इति जैमिनिर्मन्यते।

**ज्योतिषि भावाच्च** इति-

ज्योतिषि ब्रह्मणि तेषामुपासकत्वेन भावाच्च मध्वादिष्वनधिकार इति पूर्वपक्षः। तद्देवा ज्योतिषां ज्योतिः इत्यादि श्रुतेः।

**भावं तु बादरायणोऽस्ति हि** इति।

तत्र सिद्धान्तमाह, मध्वादिष्वपि सूर्यवस्वादीनामधिकारसद्भावं बादरायणो मन्यते। हि यतस्तेषां स्वान्तर्यामिब्रह्मोपासनेन कल्पान्तेऽपि स्वाधिकारप्राप्तिपूर्वकब्रह्मलिप्यासासम्भवोऽस्ति। इति प्रतिपादितम्।

**प्रथमोऽध्यायस्य तृतीयपादे अपशूद्राधिकरणम्-**

इत्यस्मिनधिकरणे षड्सूत्राणि सन्ति।

- शूद्रस्य तदनादरश्रवणात्तदाद्रवणात् सूच्यते हि
- क्षत्रियत्वावगतेश्चोत्तरत्र चैत्ररथेन लिङ्गात्
- संस्कारपरामर्शात् तदभावाभिलापाच्च
- तदभावनिर्द्धारणे च प्रवृत्ते:
- श्रवणाध्ययनार्थप्रतिषेधात्
- स्मृतेश्च

**शूद्रस्य तदनादरश्रवणात् सूच्यते हि** इति-

छान्दोग्ये मुमुक्षौ गुरुप्रयुक्तं शूद्रपदमालोच्य शूद्रोऽपि ब्रह्मविद्यायामधिक्रियते, इति नाशङ्कनीयमस्य मुमुक्षोर्जानश्रतेर्हंसप्रयुक्तानादरवाक्यश्रवणात्;। तदैव गुरुं प्रत्याद्रवणात् शुक् सञ्जाता इति शूद्रेति सम्बोधनेन सूच्यते।

**क्षत्रियत्वावगतेश्चोत्तरत्र चैत्ररथेन लिङ्गात्** इति।

"अथ ह शौनकश्च कापेयमभिप्रतारिणं च काक्षिसेनिं परिविष्यमाणो ब्रह्मचारी विभिक्षे" इत्यत्र चैत्ररथेनाभिप्रतारिणा क्षत्रियेण सह समभिव्याहाररूपलिंगात् जानश्रुते: क्षत्रियत्वस्यावगतेर्न जानश्रुति: शूद्र:।

**संस्कारपरामर्शात् तदभावाभिलापाच्च** इति-

विद्याप्रदेशे "तं होपनिन्ये" इत्यादिनोपनयनसंस्कारपरामर्शात् "शूद्रश्चतुर्थो वर्ण एकजातिर्न च संस्कारमर्हतीति" तदभावाभिलापाच्च विद्यायां विद्यायां शूद्रो नाधिक्रियते।

**तदभावनिर्धारणे च प्रवृत्तेः** इति-

किञ्च गौतमस्य जावालेः शूद्रत्वाभावनिर्णये सति तमुपनेतुमनुशासितुं प्रवृत्तेः शूद्रस्यानधिकार एवात्र।

**श्रवणाध्ययनार्थप्रतिषेधात्** इति-

शूद्रो नाधिक्रियते "शूद्रसमीपे नाध्येतव्य" मित्यादिना तस्य वेदश्रवणादिप्रतिषेधात्।

**स्मृतेश्च** इति-

न चास्योपदिशेद्धर्म मित्यादिस्मृतेश्च इति ब्रह्मविद्यायामधिकाराभावनिरूपणाधिकरणम्।

**प्रथमोऽध्यायस्य तृतीयपादे प्रमिताधिकरणम्-**

अस्मिन्नधिकरणे द्वे सूत्रे स्तः।

- कम्पनात्
- ज्योतिर्दर्शनात्

**कम्पनात्** इति-

प्रमितः परः पुरुषः प्रतिपत्तव्यः सर्वजगत्कम्पकत्वान्महदादिभ्यश्च।

**ज्योतिर्दर्शनात्** इति-

तस्य भासे ति ज्योतिर्दर्शनात् प्रमितः पुरुषः परः इति निरूपितम्। इति प्रमिताधिकरणम्।

**प्रथमोऽध्यायस्य तृतीयपादे अर्थान्तरत्वादिव्यपदेशाधिकरणम्-**

अस्मिन्नधिकरणे त्रीणि सूत्राणि सन्ति।

- आकाशोऽर्थान्तरत्वादिव्यपदेशात्
- सुषुप्त्युत्क्रान्त्योर्भेदेन
- पत्यादिशब्देभ्यः

**आकाशोऽर्थान्तरत्वादिव्यपदेशात्** इति-

"आकाशो ह वै नामरूपयोर्निर्वहिते"[52] त्यत्राकाशशब्दवाच्यः पुरुषोत्तमः। कुतः? मुक्तात्मनः जीवात् परमात्मनो नामरूपोपलक्षितनिखिलनाम-रूपवद्वस्तुनिर्बोढृतयार्थन्तरतात्वेन व्यपदेशात्, ब्रह्मत्वामृतत्वादिव्यपदेशाच्च।

**सुषुप्त्युत्क्रान्त्योर्भेदेन** इति-

अज्ञात सर्वज्ञस्य सुषुप्त्युत्क्रान्त्योर्भेदेन व्यपदेशाच्च।

**पत्यादिशब्देभ्यः** इति-

"सर्वस्याधिपतिः"[53] "सर्वस्येशानः" इत्यादि शब्देभ्यो जीवाद्भेदेन परमात्मनो व्यपदेशात् परमात्मा एवाकाश इति प्रतिपादितम्। इति आकाशाधिकरणम्। तदेवं वेदान्तकौस्तुभप्रभामाश्रित्य प्रथमोऽध्यायस्य तृतीयपादस्य विषयः समीक्षितः।

**इति वेदान्तदर्शने प्रथमाध्याये तृतीयपादः समाप्तः।**

---

[52] -छा० उ० ८.१४.१।
[53] -बृह० उप०- ४.४.२२।

## ❖ प्रथमपादस्य वेदान्तकौस्तुभप्रभाया: समीक्षात्मक: चतुर्थ: खण्ड:

सम्प्रति क्रमप्राप्तं चतुर्थपादस्य समीक्षणं क्रियते। एवं तावत् प्रथमे पादे मुमुक्षुभिर्मुक्त्युपायतया जिज्ञास्यस्य परस्य ब्रह्मण: श्रीपुरुषोत्तमस्य जतज्जन्मादिकारणत्वमुक्त्वा तत् प्रधानपुरुषयोरपि वेदान्तवाक्यै: प्रतिपाद्यत् इत्याशकङ्क्य, तानि सर्वज्ञं सर्वशक्तिं स्वाभावतोऽपास्तसमस्तदोषमशेषक्ल्याणगुणैकराशिं तमेव प्रतिपादयन्तीत्युक्तम्।

द्वितीये तृतीये च कानिचित् स्पष्टजीवादिलिङ्गकानि कानिचिदस्पष्टलिङ्गकानि च यानि वाक्यानि तान्यपि सत्यसङ्कल्पसर्वाअन्तरात्मभूतपरब्रह्मपराणीत्युक्तम्।

इदानीं चतुर्थे तु पादे कापिलतन्त्रसिद्धाब्रह्मात्मकप्रधानपुरुषादिप्रतिपादनच्छायानुसारिणं कासुचिच्छाखासु श्रूयमाणानां वाक्यानां परब्रह्मण्येव समन्वय: स्मर्यते।

वेदान्तकौस्तुभप्रभायां प्रथमोऽध्यायस्य चतुर्थपादे अष्टाधिकरणानि सन्ति एवं अष्टविंशति: सूत्राणि सन्ति। अधिकरणानि चैतानि सन्ति-

- **आनुमानिकाधिकरणम्**
- **चमसाधिकरणम्**
- **सङ्ख्योपसङ्ग्रहाधिअकरणम्**
- **कारणत्वाधिकरणम्**
- **जगद्वाचित्वाधिकरणम्**
- **वाक्यान्वयाधिकरणम्**
- **प्रकृत्याधिकरणम्**
- **सर्वव्याख्यानाधिकरणम्**

## प्रथमोऽध्यायस्य चर्तुथपादे आनुमानिकाधिकरणम्-

अस्मिनधिकरणे सप्तसूत्राणिसन्ति।

- आनुमानिकमप्येकेषामिति चेन्न, शरीररूपकविन्यस्तगृहीतेर्दर्श्यति च
- सूक्ष्मं तु तदर्हत्वात्
- तदधीनत्वादर्थवत्
- ज्ञेयत्वावचनाच्च
- वदतीति चेन्न प्राज्ञो हि प्रकरणात्
- त्रयाणामेव चैवमुपन्यासः प्रश्नश्च
- महद्वच्च

**आनुमानिकमप्येकेषामिति चेन्न, शरीररूपकविन्यस्तगृहीतेर्दर्श्यति च** इति-

ननु "महतः परमव्यक्तमव्यक्तात् पुरुषः पर"[54] इत्यत्र कठशाखायामानुमानिकं प्रधानमपि शब्दवदुपलभ्यते इति चेन्न; "आत्मानं रथिनं विद्धि शरीरं रथमेवे"[55] त्यत्र शरीरस्य रथरूपकविन्यस्तस्याव्यक्तशब्देन ग्रहणात्। इन्द्रियादीनां वशीकरणप्रकारं प्रतिपादयन्, रूपकपरिकल्पितग्रहणमेव। दर्शयति च वाक्यशेषे "यच्छेद्वांमनसि प्राज्ञस्तद्यच्छेद्ज्ञानमात्मनि, ज्ञानमात्मनि, महति तद्यच्छेच्छान्त आत्मनि"[56] इति।

**सूक्ष्मं तु तदर्हत्वात्** इति-

अव्यक्तशब्दः सूक्ष्मवचनाश्चेत्तदर्थभूतं शरीरमपि सूक्ष्मस्यैव स्थूलावस्थापन्नत्वात्।

**तदधीनत्वादर्थवत्** इति-

---

[54] -कठो० ३.११ ॥
[55] कठो० ३.३.५२ ॥
[56] -कठो० ३.१३ ॥

औपनिषदं प्रधानं परमकारणाधीनत्वादर्थवदानर्थक्यं पराभितस्य तस्येति भेदः

**ज्ञेयत्वावचनाच्च** इति-

नाव्यक्तशब्दस्तान्त्रिक प्रधानवचनः ज्ञेयत्वावचनाच्च।

**वदतीति चेन्न प्राज्ञो हि प्रकरणात्** इति-

"अनाद्यनन्तं महतः परं ध्रुवं, निचाय्य तं मृत्युमुखात् प्रमुच्यते" इति श्रुतेः प्रधानस्य ज्ञेयत्वं वदतीति चेन्न। ज्ञेयत्वेन प्राज्ञः परमात्मा निर्दिष्टस्तत्प्रकरणात्।

**त्रयाणामेव चैवमुपन्यासः प्रश्नश्च** इति-

अस्यामुपनिषद्युपायोपेयोपगं त्रयाणामुपन्यासः प्रश्नश्च पूर्वापरवाक्यार्थविचारेण लभ्यते। आनुमानिकतत्त्वनिरूपणस्यात्रावकाशो नास्ति।

**महद्वच्च** इति-

सांख्यैर्महच्छब्दो बुद्ध्याख्यः द्वितीये तत्त्वे प्रत्युक्तोऽपि ततोऽन्यत्राऽपि "वेदाहमेतं पुरुषं महन्त" मित्यादिवेदवचनेन यथा दृश्यते तथाऽव्यक्तशब्दः शरीरपरोऽस्तु इति निरूपितं।

**प्रथमोऽध्यायस्य चतुर्थपादे चमसाधिकरणम्-**

अस्मिनधिकरणे त्रीणि सूत्राणि सन्ति-

- चमसवदविशेषात्
- ज्योतिरुपक्रमा तु तथा ह्यधीयत एके
- कल्पनोपदेशाच्च मध्वादिवदविरोधः

**चमसवदविशेषात्** इति-

"अजामेका"[57] मित्यादि मन्त्रोक्ता प्रकृतिः स्मृतिसिद्धा भवतु इति पूर्वपक्षे राद्धन्तं दर्शयति। मन्त्रोक्ताऽजा ब्रह्मात्मिकाऽस्तु। पूर्वपक्षनिर्द्धारणे विशेषाभावात् "अर्वाग्विलचमस" इति मन्त्रोक्त चमसवत्।

**ज्योतिरुपक्रमा तु तथा ह्यधीयत एके** इति-

ननु चमसमन्त्रे "इदं तच्छिर" इति वाक्यशेषाच्छिरश्चमस इति गम्यते। अजामन्त्रे किं गमकं विशेषार्थग्रहणे इत्यत्रोच्यते ज्योतिर्ब्रह्मलक्षणमुपक्रमः कारणं यस्याः साऽत्राप्यजामन्त्रेणोच्यते, यतस्तथैव "तस्मादेतद्ब्रह्म नामरूपमन्नं च जायते"[58] इत्येकेऽधीयते।

**कल्पनोपदेशाच्च मध्वादिवदविरोधः** इति-

"ब्रह्मोपादानकत्वाऽजात्वयोरेकस्मिन् धर्मणि न विरोधः। सूक्ष्मशक्तिमतो जगत्कारणात् ब्रह्मणो विश्वसृष्ट्युपदेशाद्द्वयं संगच्छते, मध्वादिवत् इति प्रतिपादितम्।

**प्रथमोऽध्यायस्य चतुर्थपादे सङ्ख्योपसङ्ग्रहाधिकरणम्-**

इत्यस्मिनधिकरणे त्रीणि सूत्राणि सन्ति।

- न संख्योपसंग्रहादपि नानाभावादतिरेकाच्च
- प्राणादयो वाक्यशेषात्
- ज्योतिषैकेषामसत्यन्ने

**न संख्योपसंग्रहादपि नानाभावादतिरेकाच्च** इति-

---

57 - श्वेताश्व० ४.५ ॥

58 - मु० १.१.९ ॥

"न च यस्मिन् पञ्चपञ्चजना आकाशश्च प्रतिष्ठितः" इति संख्योपसंग्रहादपि प्रधानादीनां पञ्चविंशतिपदार्थानां श्रुतिमूलकत्वमस्ति, प्रधानस्यैकस्य श्रुतिवेद्यत्वे को विवाद, इति न वक्तव्यम्। कुतः? नानाभावात्, यस्मिन्निति श्रुतिसिद्धे ब्रह्मणि प्रतिष्ठितानां पदार्थानां ब्रह्मात्मकत्वप्रतीत्या तान्त्रिकेभ्यः पृथक्त्वात्। आधारस्य ब्रह्मणो हि तथाकाशस्य चातिरेकत्वाच्च।

**प्राणादयो वाक्यशेषात्** इति-

"प्राणस्य प्राणम्"[59] इत्यादि वाक्यशेषात् ते पञ्चजनाः प्राणा बोध्याः।

**ज्योतिषैकेषामसत्यन्ने** इति-

काण्वानां वाक्यशेषे त्वसत्यन्ने उपक्रमगतेन ज्योतिषा पञ्चत्वं पूरणीयम् इति विवेचनम्।

**प्रथमोऽध्यायस्य चतुर्थपादे कारणत्वाधिकरणम्-**

अस्मिनधिकरणे द्विसूत्राणि सन्ति-

- कारणत्वेन चाकाशादिषु यथाव्यपदिष्टोक्तेः
- समाकर्षात्

**कारणत्वेन चाकाशादिषु यथाव्यपदिष्टोक्तेः** इति-

सर्वज्ञं सर्वशक्ति ब्रह्मैव सर्वत्राकाशादिः सृष्टिविषयकवाक्येषु ग्राह्यं, लक्षणसूत्रादिषु यत्प्रकारकं ब्रह्म व्यपदिष्टं, तत्प्रकारकस्यैवाकाशादित्वेन प्रतिपादितत्वात्।

---

[59] - वृहदारण्यक् ४.४.१८॥

**समाकर्षात्** इति-

"सोऽकामयत"[60] इति प्रकृतस्य सत एव ब्रह्मण "असद्वा इदम्" इत्यत्र समाकर्षात् "आदित्यो ब्रह्म" इति प्रकृतस्य ब्रह्मण: "असदेवेदम्" इत्यत्र समाकर्षात्। असच्छब्देन सृष्टे: पूर्वं नामरूपाविभागात् तत्सम्बन्धितयाऽस्तित्वाभावेन सद्रूपं ब्रह्मैवाभिधीयते। "तदेवं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यामेव व्याक्रियते" इत्यव्याकृतशब्दोदितस्योत्तरवाक्ये "स एष इह प्रविष्ट आनखाग्रेभ्य:"[61] इत्यादौ समाकर्षादचेतनस्य प्रधानस्यान्त: प्रविश्य प्रशासितृत्वाद्यसम्भवात्, तदन्तरात्मभूतमव्याकृतं ब्रह्मेत्युच्यते। जगत्कारणप्रतिपादकेषु वाक्येषु लक्षणसूत्रादिना निर्णीतं ब्रह्मैव ग्राह्यं, न प्रधानशंकागन्धोऽपीति भाव:।

**प्रथमोऽध्यायस्य चतुर्थपादे जगद्वाचित्वाधिकरणम्-**

अस्मिनधिकरणे त्रीणि सूत्राणि सन्ति।

- जगद्वाचित्वात्
- जीवमुख्यप्राणलिङ्गान्नेति चेत् तद्व्याख्यातम्
- अन्यार्थं तु जैमिनि: प्रश्नव्याख्यानाभ्यामपि चैवमेके

**जगद्वाचित्वात्** इति-

यो वै बालाके। एतेषां पुरुषाणां कर्त्ता यस्यैतत् कर्म इति वाक्ये धर्म्माधर्मकर्मफलभोक्ता तन्त्रोक्तपुरुषो वेदितव्य: इति न वक्तुं शक्यं, परमात्मैवात्र वेदितव्यत्वेन निर्दिष्ट:। कुत:? ब्रह्म ते ब्रवाणि इति ब्रह्मप्रकरणात्। क्रियते यत्तत् कर्मेति

---

[60] - तैत्तरीय २.६ ॥

[61] - वृहदारण्यक्- ६.८.१ ॥

कर्मशब्दस्य जगद्वाचित्वात्, एतदि त्यनेन सर्वनाम्ना प्रत्यक्षादिप्रमाणसिद्धस्य जगत उपस्थितत्वाच्च, तन्त्रोक्तपुरुषप्रकरणाभावाच्च।

**जीवमुख्यप्राणलिङ्गान्नेति चेत् तद्व्याख्यातम्** इति-

एष प्रज्ञात्मा एतैरात्मभिर्भुङ्क्ते इति जीवलिङ्गात् अथस्मिन् प्राणे एवैकधा भवति इति मुख्यप्राणलिङ्गाच्च तदन्यतरो ग्राह्यो न ब्रह्मेति चेत् तद्व्याख्यातम् प्रतर्दनाधिकारे। जीवादिलिङ्गानि तत्र ब्रह्मपरत्वेन व्याख्यातानि: तद्वदिहापि ज्ञेयानीत्यर्थ:।

**अन्यार्थं तु जैमिनि: प्रश्नव्याख्यानाभ्यामपि चैवमेके** इति-

अस्मिन् प्रकरणे जीवग्रहणमन्यार्थं, जीवव्यतिरिक्तब्रह्मबोधार्थम् इति जैमिनिर्मन्यते, क्वैष एतद्बालाके! पुरुषोऽशयिष्ट, क्व वा एतदभूत्, कुत एतदगादि ति प्रश्नात्, यदा सुप्त: स्वप्नं न कंचन पश्यति अथास्मिन् प्राणे एवैकधा भवति इत्यादि प्रतिवचनात् वाजसनेयिनोऽपि च एवमेव जीवव्यतिरिक्तं परमात्मानमामनन्ति। तत्राऽपि प्रश्नप्रतिवचने भवत: क्वैष तदाभूत कुत एतदगात् इति प्रश्न। य एषोऽन्तर्हृदये आकाशस्तस्मिन् शेते इति प्रतिवचनम्।

## प्रथमाध्याये चतुर्थपादे वाक्यान्वयाधिकरणम्-

अस्मिनधिकरणे चत्वारिसूत्राणि सन्ति-

- वाक्यान्वयात्
- प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्य:
- उत्क्रमिष्यत एवं भावादित्यौडुलोमि:
- अवस्थितेरिति काशकृत्स्न:

**वाक्यान्वयात्** इति-

"आत्मा वा अरे द्रष्टव्य:"[62] इत्यादिना परमात्मा द्रष्टव्यत्वेन ग्राह्यो, वाक्यस्योपक्रमादिपर्यालोचनया तत्रैवान्वयात्।

**प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्य:** इति-

प्रतिज्ञा सिद्ध्यर्थम् एकविज्ञानेन सर्वविज्ञानप्रतिज्ञासिद्ध्यर्थं, जीवस्य परमात्मकार्यतया परमात्मानन्यत्वात् तद्वाचकशब्देन परमात्माभिधानं गमकम् इति आश्मरथ्यो मन्यते स्म।

**उत्क्रमिष्यत एवं भावादित्यौडुलोमि:** इति-

शरीरात् उत्क्रमिष्यते जीवस्य, एवम्भावात् अभेदभावात् ब्रह्मणा सह भावात् तच्छब्देन ब्रह्माभिधीयते इत्यौडुलोमि: मन्यते स्म।

**अवस्थितेरिति काशकृत्स्न:** इति-

जीवात्मनि स्वनियम्ये "अन्त:प्रविष्ट: शास्ता जनानाम्"[63] इत्यादौ प्रसिद्धस्य परमात्मनो नियन्तृत्वेनावस्थितेर्हेतोर्नियम्यपदेनोपक्रमादौ नियन्तृपरिग्रह इति काशकृत्स्नो मन्यते स्म।

**प्रथमोऽध्यायस्य चतुर्थपादे प्रकृत्याधिकरणम्-**

अस्मिनधिकरणे षट्सूत्राणि सन्ति यत् निम्न: सन्ति।

- प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्
- अभिध्योपदेशात्
- साक्षाच्चोभयाम्नानात्

---

62 - बृहदारण्यक् २.४.५ ॥
63 - छा० तैत्तिरीय आ० ३.११॥

- आत्मकृतेः परिणामात्
- योनिश्च हि गीयते
- एतेन सर्वे व्याख्याता व्याख्याताः

**प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्** इति-

प्रकृतिरुपादानकारणं चकारान्निमित्तकारणञ्च परमात्मैव। उत त्वमादेशमप्राक्षो येनाश्रुतं श्रुतं भवत्यामतं मतं भवत्यविज्ञातं विज्ञातं भवति इति प्रतिज्ञायाः, "यथा सौम्य एकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्यात्"[64] इति दृष्टान्तस्य च सामञ्जस्यात्।

**अभिध्योपदेशात्** इति-

"तदैक्षत बहु स्याम्"[65] इत्यादिना तदुपदेशात् ब्रह्मणः स्रष्टृत्वप्रकृतित्वे वर्तेते।

**साक्षाच्चोभयाम्नानात्** इति-

ब्रह्मवनं ब्रह्म च वृक्ष आसीद्यतो द्यावापृथिवीनिष्ठतक्षर्मनीषिणो मनसा पृच्छ्यते एतद्यदध्यतिष्ठद्भुवनानि धारयन्नि' ति निमित्तत्वमुपादानञ्च ब्रह्मणः आम्नानाद्ब्रह्मैवोभयरूपम्।

**आत्मकृतेः परिणामात्** इति-

ब्रह्मैव निमित्तमुपादानञ्च। कुतः? "तदात्मानं स्वयमकुरुत" इत्यात्मकृतेः। ननु कर्त्तुः कुतः कृतिविषयत्वम्? परिणामात् सर्वज्ञं सर्वशक्ति ब्रह्म स्वशक्तिविक्षेपेण जगदाकारं स्वात्मानं परिणम्य अव्याकृतेन स्वरूपेण शक्तिमता कृतिमता परिणतमेव भवति।

---

[64] -छा० ६.१.४ ॥

[65] -छा० ६.३.३ ॥

- आत्मकृते: परिणामात्
- योनिश्च हि गीयते
- एतेन सर्वे व्याख्याता व्याख्याता:

**प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्** इति-

प्रकृतिरुपादानकारणं चकारान्निमित्तकारणञ्च परमात्मैव। उत त्वमादेशमप्राक्षो येनाश्रुतं श्रुतं भवत्यामतं मतं भवत्यविज्ञातं विज्ञातं भवति इति प्रतिज्ञाया:, "यथा सौम्य एकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्यात्"[64] इति दृष्टान्तस्य च सामञ्जस्यात्।

**अभिध्योपदेशात्** इति-

"तदैक्षत बहु स्याम्"[65] इत्यादिना तदुपदेशात् ब्रह्मण: स्रष्टृत्वप्रकृतित्वे वर्तेते।

**साक्षाच्चोभयाम्नानात्** इति-

ब्रह्मवनं ब्रह्म च वृक्ष आसीद्यतो द्यावापृथिवीनिष्ठतक्षर्मनीषिणो मनसा पृच्छ्यते एतद्यदध्यतिष्ठद्भुवनानि धारयन्नि' ति निमित्तत्वमुपादानञ्च ब्रह्मण: आम्नानाद्ब्रह्मैवोभयरूपम्।

**आत्मकृते: परिणामात्** इति-

ब्रह्मैव निमित्तमुपादानञ्च। कुत:? "तदात्मानं स्वयमकुरुत" इत्यात्मकृते:। ननु कर्त्तु: कुत: कृतिविषयत्वम्? परिणामात् सर्वज्ञं सर्वशक्ति ब्रह्म स्वशक्तिविक्षेपेण जगदाकारं स्वात्मानं परिणम्य अव्याकृतेन स्वरूपेण शक्तिमता कृतिमता परिणतमेव भवति।

---

[64] -छा० ६.१.४ ॥

[65] -छा० ६.३.३ ॥

**योनिश्च हि गीयते** इति-

"यद्भूतयोनिं परिपश्यन्ति धीराः कर्त्तारमीशं पुरुषं ब्रह्मयोनिमि" ति चेति योनिशब्देन ब्रह्म गीयते। अतो ब्रह्मैवोपादानम्।

**एतेन सर्वे व्याख्याता व्याख्याताः** इत्यस्मिनधिकरणे सूत्रमेकमेव अयं भावः-

एतेनाधिकरणसमुदायेन सर्वे वेदान्ता ब्रह्मपरत्वेन व्याख्याता व्याख्याताः।

**प्रथमोऽध्यायस्य चतुर्थपादे सर्वव्याख्यानाधिकरणम्-**

इत्यस्मिनधिकरणे सूत्रमेकमेव अस्ति।

तदेवं वेदान्तकौस्तुभप्रभायां निम्बार्क दर्शनदिशा प्रथमपादे स्पष्टब्रह्मलिङ्गानि वाक्यानि विचारितानि। द्वितीयेऽनतिस्पष्टब्रह्मलिङ्गानि। तृतीये स्पष्टास्पष्टब्रह्मलिङ्गानि। चतुर्थे त्वस्मिन् अस्पष्टब्रह्मलिङ्गानि वाक्यानि विचार्यन्त इति ब्रह्मलिङ्गानां स्थूलसूक्ष्मसूक्ष्मतरसूक्ष्मतमत्वक्रमेण पादानामवतार इति भावः। तदित्थम् वेदान्तकौस्तुभप्रभायां श्रीकेशवभट्टमहाभागैः वेदान्त पारिजाते श्री निम्बार्कचार्यैः यः सिद्धान्तः प्रतिपादितः एवं वेदान्तकौस्तुभे श्री निवासाचार्यैः निम्बार्कदर्शनस्य यथा पुष्पितं कृतं तदरीतिमनुश्रत्य भेदाभेदवादस्य सम्यक् पोषणपूर्वकं तद्विरुद्धस्य शांङ्करवेदान्तस्य द्वैतवेदान्तस्य च सम्यक् आलोढनपूर्वकं निराशः कृतः समग्रस्य समन्वयाध्यायस्य राधाकृष्णयुगल स्वरूपे भगवति समन्वयः प्रतिपादितः। तत्र अस्य प्रथमोऽध्यायस्य कौस्तुभप्रभायाः अवलोकने इदं अस्पष्टं अवगम्यते अत्र काश्मीरिकेशवभट्टाचार्यैः न केवलं निम्बार्कदर्शने परिश्रमः कृतः अपितु अद्वैतदर्शने विशिष्टाद्वैत दर्शने माध्वदर्शनेऽपि परिश्रमः कृतः तत् तत् ग्रन्थारूढस्य विषयजातस्य सम्यक् निराकरणम् वेदान्त सूत्राणां सर्वज्ञः स्वाभाविकाचिन्त्यानन्तयावदात्मवृत्तिशक्तिगुणाद्याश्रयो

ब्रह्मरुद्रेन्द्रप्रकृतिपरमाणुकालकर्मस्वभावादिनियन्ता दोषास्पृष्टसीमा चिदचित्स्वाभाविकभिन्नाभिन्नत्वाश्रयो भगवान् वासुदेवः श्रीपुरुषोत्तमः

# द्वितीयोऽध्यायः

## वेदान्तकौस्तुभप्रभायाः द्वितीयोऽध्यायस्य समीक्षात्मकः

### ❖ प्रथमपादस्य वेदान्तकौस्तुभप्रभायाः समीक्षात्मकः प्रथमखण्डः।

प्रथमाध्याये चत्वारः पादाः सन्ति। समन्वयाध्याये वेदान्तवाक्यानाम् पुरुषोत्तमे वासुदेवे समन्वयः प्रतिपादितः।

द्वितीयाध्याये अस्य समन्वयस्य विरोधस्य परिहारः क्रियते।

सम्प्रति प्रथमपादस्य विवेचनम् क्रियते। अत्र प्रथमपादे दशाधिकरणानि सन्ति। तानि च-

- **स्मृत्यधिकरणम्**
- **योगप्रत्युक्त्यधिकरणम्**
- **विलक्षणत्वाधिकरणम्**
- **शिष्टापरिग्रहाधिकरणम्**
- **भोक्त्रापत्त्यधिकरणम्**
- **आरम्भणाधिकरणम्**
- **इतरव्यपदेशाधिकरणम्**
- **उपसंहारदर्शनाधिकरणम्**
- **कृत्स्नप्रसक्त्यधिकरणम्**
- **प्रयोजनवत्त्वाधिकरणम्**

एवं प्रथमाध्याये वेदानां निखिलदोषस्पृष्टमाहात्म्यसीम्न्यचिन्त्यानन्तयावदात्म- जगत्कारणे वृत्तिस्वाभाविकासंख्येयसार्वज्ञ्यादिसद्गुणार्णवेऽनन्ताचिन्त्यअशक्तौ

परब्रह्मणि श्रीवासुदेवे भगवति समन्वय उक्तः। इदानीमुक्तसमन्वयस्य सांख्यादिस्मृतियुक्तिभिर्विरोध परिहाराय प्रधानादिवादानां युक्त्याभासत्वदर्शनाय प्रतिवेदान्तं सृष्ट्यादिप्रक्रियाया एकविधत्वदर्शनाय च द्वितीयोऽध्याय आरभ्यते। तत्र प्रथमं तावत् स्मृत्यविरोधो निरूप्यते।

**द्वितीयोऽध्यायस्य प्रथमपादे स्मृत्याधिकरणम्-**

- स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गात्
- इतरेषां चानुपलब्धेः

अस्मिन् अधिकरणे द्वे सूत्राणि सन्ति। सूत्रस्या आशयः कौस्तुभप्रभारित्या वर्णयते-

पूर्वत्र ब्रह्मणोऽन्यप्रमाणागोचरतया वेदैकवेद्यत्वं निर्णीतम् अतीन्द्रयत्वान्नेन्द्रियाणि नानुमानम् इति श्रुतेः।

एवं श्रुत्यर्थस्याप्तप्रणीततदुपबृंहणौपयिकस्मृतिं विना दुर्ज्ञेयत्वादल्पश्रुतानां मन्दमतीनां तन्निश्चयानुपपत्तेश्च स्मृतयोऽप्यवश्यमपेक्षिताः। तत्र च श्रुत्युपबृंहणाय सांख्यादिस्मृतिर्ग्राह्या, मन्वादिस्मृतिर्वेति विषये पूर्वपक्षमाह स्मृत्यनवकाशदोषप्रसङ्ग इति चेदिति। मन्वादिस्मृतीनां स्वर्गाद्यभ्युदयफलकाग्निहोत्रज्योतिष्टोमादिनित्यनैमित्तिकादिधर्मप्रतिपादने सावकाशतया कृतार्थत्वात्, ऋषिं प्रसूतं कपिलं यस्तमग्रे ज्ञानैर्बिभर्ति, जायमानं च पश्येत् इति शास्त्रसंस्तुत्यमहर्षिप्रणीतायाः अथ त्रिविधदुःखात्यन्तनिवृत्तिरत्यन्तपुरुषार्थः न दृष्टात् तत्सिद्धिर्निवृत्तेऽप्यनुवृत्तिदर्शनात् विमुक्तमोक्षार्थं स्वार्थं वा प्रधानस्य अचेतनत्वेऽपि क्षीरवच्चेष्टितं प्रधानस्य इत्यादिसांख्यस्मृतेः केवलपरतत्त्वप्रतिपादनपरत्वात् तदनुसारेणैव वेदान्तशास्त्रमपि

व्याख्येयम्। अन्यथा तस्या अन्यत्र निरवकाशतया बाधरूपदोषापत्तेः। सावकाशनिरवकाशयोर्निरवकाशं बलीयः इति न्यायात्।

उक्तसमन्वयस्याविरोध प्रकारः प्रतिपद्यते। ननु श्रुत्युपवृंहणाय स्मृत्यपेक्षा वर्त्तते, तत्र साङ्ख्यस्मृतिर्ग्राह्या। न चाचेतनकारणवादिनी साऽतो न ग्राह्येति वाच्यम्। स्मृत्यनवकाश दोष प्रसंगादिति चेन्नः अन्यस्मृतीनां वेदोक्तचेतनकारणविषयाणां बाधप्रसंगादिति वाक्यार्थः।

**इतरेषां चानुपल्ब्धेः** इति-

इतरेषां, मन्वादीनां वेदस्य प्रधानपरत्वानुपलब्धेश्च वेदविरुद्धस्मृतेरप्रामाण्यम् इति निरूपितम्।

**द्वितीयोऽध्यायस्य प्रथमपादे योगप्रत्युक्त्यधिकरणम्-**

अस्मिनधिकरणे एकमेव सूत्रमस्ति।

- **एतेन योगः प्रत्युक्तः-**

सांख्यस्मृतिनिरासेन योगस्मृतिरपि प्रत्याख्याताऽस्ति।

**द्वितीयोऽध्यायस्य प्रथमपादे विलक्षणत्वाधिकरणम्-**

अस्मिनधिकरणे अष्टसूत्राणि सन्ति यत् निम्नः

- न विलक्षणत्वादस्य तथात्वं च शब्दात्
- अभिमानिव्यपदेशस्तु विशेषाणानुगतिभ्याम्
- दृश्यते तु
- असदिति चेन्न प्रतिषेधमात्रत्वात्

- अपीतौ तद्वत् प्रसङ्गादसमञ्जसम्
- न तु दृष्टान्तभावात्
- स्वपक्षे दोषाच्च
- तर्काप्रतिष्ठानादप्यन्यथानुमेयमिति चेदेवमप्यनिर्मोक्षप्रसङ्ग:

**न विलक्षणत्वादस्य तथात्वं च शब्दात्** इति-

जगतो न चेतनप्रकृतिकत्वम्; विलक्षणत्वात्। जगत: अचेतनत्वात् परमात्मनश्च चेतनत्वात्, अस्य जगत:, न तथात्वम्। विलक्षणत्वञ्च विज्ञानञ्चाभवदित्यादि शब्दादप्यस्यावगन्तव्यम्।

**अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम्** इति-

पृथिव्यऽब्रवीत्ते हेमे प्राणा अहं श्रेयसे विवदमाना ब्रह्म जग्मु: इत्यादौ तु तदभिमानिनीनां देवतानां व्यपदेश: हन्ताहमिमास्तिस्तो देवता इति विशेषणात् अग्निर्वाग् भूत्वा मुखं प्राविशदि त्याद्यनुगतेश्च।

**दृश्यते तु** इति-

तत्रोच्यते पुरुषाद्विलक्षणस्य केशादेर्गोमयाद्विलक्षणस्य वृश्चिकस्योत्पत्तिर्दृश्ययतेऽतो ब्रह्मविलक्षणत्वाज्जगतो न तत्प्रकृतिकत्वमिति न वक्तव्यम्।

**असदिति चेन्न प्रतिषेधमात्रत्वात्** इति-

ननूपादानादुपादेयस्य विलक्षणत्वे उत्पत्ते: पूर्वं तदसद्भवितुमर्हतीति: नैष दोष: पूर्वं सूत्रे प्रकृतिविकारयो: सर्वथा सादृश्यनियमस्य प्रतिषेधमात्रत्वात्।

**अपीतौ तद्वत् प्रसङ्गादसमञ्जसम्** इति-

आक्षेप: (अपीतौ) प्रलयसमये (तद्वत्- अचेतन) कार्यवत् कारणस्यापि अचेतनत्वादिप्राप्तिप्रसङ्गात् जगदुपादानं ब्रह्मेत्यसमञ्जसम्।

**न तु दृष्टान्तभावात्** इति-

समाधानम्। (न) तद्वत् प्रसङ्गो नैवास्ति, (कुत:) दृष्टान्तभावात्, विकार: उपादाने लीयमान: स्वधर्मैरुपादानं न दूषयति इत्यस्मिन् अर्थे दृष्टान्तानां भावात् विद्यमानत्वात्, यथा पृथिवीविकारस्तस्यां विलीयमानस्तां न दूषयति, तथा ब्रह्मविकार: संसार:।

**स्वपक्षे दोषाच्च** इति-

वेदविरुद्धवादी साङ्ख्यो वक्तुमक्षमस्तत्पक्षेऽप्युक्तदोषयोगात्।

**तर्काप्रतिष्ठानादप्यथानुमेयमिति चेदेवमप्यनिर्मोक्षप्रसङ्ग:** इति-

तर्कानवस्थानाच्चोक्तसिद्धान्तस्य नासामञ्जस्यम्। दृढतर्केण वेदविरुद्धे प्रधानादिके जगत्कारणेऽनुमिते तादृशेन तर्केण सत्प्रतिपक्षसम्भवात्। एवमेव तार्किकविप्रतिपत्त्याऽनिर्मोक्षप्रसङ्गाद्वेदोक्तस्यैवोपादेयत्वमिति सिद्धम्।

**द्वितीयोऽध्यायस्य प्रथमपादे शिष्टापरिग्रहाधिकरणम्-**

अस्मिनधिकरणे एकमेव सूत्रमस्ति यत् निम्न: अस्ति।

- **एतेन शिष्टापरिग्रहा अपि व्याख्याता:** इति-

एतेन सांख्यपक्षनिरासेन परिशिष्टा: वेदविरुद्धकारणवादिनोऽन्येऽपि प्रत्युक्ता:। भोक्त्रापत्तेरविभागश्चेत् स्याल्लोकवत्। ब्रह्मणो जगदुपादानत्वे जीवरूपेण ब्रह्मण एव भोक्त्रापत्तेरविभागो न स्यात् इति चेत् अविभागेऽपि सुखदु:खभोक्तृत्वापत्ते: वेदप्रसिद्धो भोक्तृनियन्तृविभागो न स्यात् इति चेत् अविभागेऽपि

(विभागव्यवस्थोपपद्यते, दृष्टान्तसद्भावात्) समुद्रतरङ्गयोरिव, सूर्यतत्प्रभयोरिव तयोर्विभागः स्यात्।

## द्वितीयोऽध्यायस्य प्रथमपादे भोक्त्रापत्त्यधिकरणम्-

अस्मिनधिकरणे षट्सूत्राणि सन्ति यत् निम्नः-

- तदनन्यत्वमारम्भणशब्दादिभ्यः
- भावे चोपलब्धेः
- सत्त्वाच्चावरस्य
- असद्व्यपदेशान्नेति चेन्न धर्मान्तरेण वाक्यशेषाद्युक्तेः शब्दान्तराच्च
- पटवच्च
- यथा च प्राणादिः

**तदनन्यत्वमारम्भणशब्दादिभ्यः** इति-

कार्यस्य कारणनन्यत्वमस्ति, नत्वत्यन्तभिन्नत्वम्, कुतः? वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम, "ऐतदात्म्यमिदं सर्वं"[66] "तत् सत्यं तत्त्वमसि"[67] "सर्वं खल्विदं ब्रह्म"[68] इत्यादिभ्यः।

**भावे चोपलब्धेः** इति-

कार्यस्य कारणादनन्यत्वं कुतोऽवगम्यते? तत्राह, कारणसद्भावे सति, कार्यस्य उपलब्धेः, सन्मूलाः सौम्येमाः प्रजाः इत्यादिश्रुतेः।

**सत्त्वाच्चावरस्य** इति-

---

[66] -छा० ६.८.७॥

[67] - छा० ६.८.७॥

[68] - छा० ३.१४.१॥

ब्रह्म वा इदमग्र आसीदि ति समानाधिकरण्यनिर्देशेनावरकालीनस्य कार्यस्य कारणे सत्त्वात्तदनन्यत्वम् ।

**असद्व्यपदेशान्नेति चेन्न धर्मान्तरेण वाक्यशेषाद्युक्तेः शब्दान्तराच्च** इति-

"असदेवेदमग्र आसीत्"[69] इति वाक्ये, कार्यस्य असत्त्वं व्यपदेशात् न सृष्टेः प्राक् सत्त्वम् इति चेत तन्नः धर्मान्तरेण (सूक्ष्मत्वेन) तादृक् व्यपदेशात्। कुतोऽवगम्यते? "तत् सदासीत्"[70] इति वाक्यशेषात्। यद्यसदेव कार्यमुत्पद्यते तर्हि वह्नेर्यवाद्यङ्कुरोत्पत्तिः कुतो नास्तीति युक्तेः "सदैव सौम्येदमग्र आसीत्"[71] इति शब्दान्तराच्च।

**पटवच्च** इति-

यथा च पूर्वं संवेष्टितः पश्चात् प्रसारितः पटस्तद्वद्विश्वम्।

**यथा च प्राणादिः** इति-

यथा च प्राणापानादिवायुः प्राणायामादिना विरुद्धः स्वरूपेणावतिष्ठते, विगतनिरोधश्चांजसा तत्तद्रूपेणावगृह्यते तथेदमपि।

**द्वितीयोऽध्यायस्य प्रथमपादे इतरव्यपदेशाधिकरणम्-**

अस्मिनधिकरणे त्रीणि सूत्राणि सन्ति यत् निम्नः अस्ति।

- इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः
- अधिकं तु भेदनिर्देशात्
- अश्मादिवच्च तदनुपपत्तिः

---

69 - छा० ३, अ० १९ ख० ॥

70 - छा० ३, अ० १९ ख० ॥

71 - छा० ६.२.१ ॥

**इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः** इति-

आक्षेपः, ब्रह्मकारणवादे "अयमात्मा ब्रह्मो"[72]ति जीवस्य ब्रह्मत्वनिरूपणात् सर्वक्लेशालयजगज्जननेनात्मनो हिताकरणादिदोषप्रसक्तिः।

**अधिकं तु भेदनिर्देशात्** इति-

तत्परिहारः सुखदुःखभोक्तुः शारीरादधिकमुत्कृष्टं ब्रह्मजगत्कर्तृब्रूमः आत्मानमन्तरो यमयति इति भेदव्यपदेशान्न तयोरत्यन्ताभेदोऽस्ति यतो हिताकरणादिदोष-प्रसक्तिः स्यात्।

**अश्मादिवच्च तदनुपपत्तिः** इति-

भूविकारवज्रवैदूर्यादिवद्ब्रह्माभिन्नोऽपि क्षेत्रज्ञः स्वस्वरूपतो भिन्न एवातः परोक्तस्थानुपपत्तिः इति प्रतिपादितम्।

**द्वितीयोऽध्यायस्य प्रथमपादे उपसंहारदर्शनाधिकरणम्-**

अस्मिनधिकरणे द्वे सूत्रे स्तः ते च-

- उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि
- देवादिवदपि लोके

**उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि** इति-

उपसंहारदर्शनात् कार्यनिष्पादकसामग्रीसंग्रहदर्शनात् कुम्भकारादीनाम् उपसंहारदर्शनात् अनेकोपकरणोपसंहारदर्शनात् बाह्योपकरणरहितं ब्रह्म न जगत्कारणम् इति चेन्न हि यतः क्षीरवत् कार्याकारेण ब्रह्म परिणमते स्वकीयासाधारणशक्तिमत्त्वात्।

---

[72]-बृहदारण्यक् २.४.१९ ॥

**देवादिवदपि लोके** इति-

यथा देवादयः सङ्कल्पमात्रेण स्वापेक्षितं सृजन्ति, तथा भगवानपि।

## द्वितीयोऽध्यायस्य प्रथमपादे कृत्स्नप्रसक्त्यधिकरणम्-

अस्मिनधिकरणे षट्सूत्राणिसन्ति यत् निम्नः-

- कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा
- श्रुतेस्तु शब्दमूलत्वात्
- आत्मनि चैवं विचित्राश्च हि
- स्वपक्षे दोषाच्च
- सर्वोपेता च सा तद्दर्शनात्
- विकरणत्वान्नेति चेत् तदुक्तम्

**कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोषो वा** इति-

आक्षिपति ब्रह्मणो जगत्प्रकृतित्वे तन्निरवयवत्वांगीकारे कृत्स्नप्रसक्तिः स्थावयवत्वे निरवयवत्वादि शास्त्रं विरुध्यते।

**श्रुतेस्तु शब्दमूलत्वात्** इति-

तु शब्दः पूर्वपक्षनिषेधार्थः। नहि कृत्स्नप्रसक्तिर्निरवयवशब्दकोपश्च कुतः। श्रुतेः जगदभिन्ननिमित्तोपादानत्वजगद्विलक्षणत्वपरिणतशक्तिमत्त्वविषयकश्रुतिकदम्बादित्य र्थः। तथा च श्रुतयः "सोऽकामयत बहु स्याम्"[73] स्वयमात्मानमकुरुत तत्सृष्ट्वा तदेवानुप्राविशत् "यथोर्णनाभिः सृजते तथा पुरुषाद्भवति विश्वम्"[74]

---

[73] -तैत्तिरीय २.६ ॥

[74] -मुण्ड० १.१.७ ॥

इत्याद्याः। शब्दमूलत्वात् अन्यं निर्मूलम्। "ऐतदात्म्यमिदं सर्वं"[75] "सर्वं खल्विदं ब्रह्म"[76] इत्यादिश्रुतिव्याकोपश्च भवेदित्यर्थः।

**आत्मनि चैवं विचित्राश्च हि** इति-

आत्मनि च जीवे प्राप्तैश्वर्ये अप्राप्तैश्वर्ये च देवादिशरीरक्षेत्रज्ञे यदा नानाविकृतयः सङ्गताः सन्ति, तदा सर्वशक्तौ सर्वेश्वरे जगत्कारणे काऽनुपपत्तिः।

**स्वपक्षे दोषाच्च** इति-

अस्मत्पक्षस्तिष्ठतु स्वपक्षेऽपि भवदुक्तदोषापातान्मूकीभावो युक्तः।

**सर्वोपेता च सा तद्दर्शनात्** इति-

"परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च"[77] त्यादि श्रुतेः सा देवता सर्शक्त्युपेता सर्वं कर्त्तुं समर्था भवति।

**विकरणत्वान्नेति चेत्तदुक्तम्** इति-

विकरणत्वात् निरिन्द्रियत्वात् न तस्य कार्यं करणं च विद्यते इति करणनिषेधात् सर्वाशक्त्युपेतस्यापि जगत्कर्तृत्वं न सङ्गच्छते इति चेत् अत्र वक्तव्यमुत्तरं यत् तत् पूर्वत्रोक्तमेव इति निरूपितम्।

---

[75]-छान्दो० ६.८.७ ॥

[76]- छान्दो० ३.१४.१ ॥

[77]-श्वेता० ३.९ ॥

## द्वितीयोऽध्यायस्य प्रथमपादे प्रयोजनत्वाधिकरणम्-

अस्मिनधिकरणे पञ्चसूत्राणि सन्ति यत् तानि च-

- न प्रयोजनवत्त्वात्
- लोकवत् तु लीलाकैवल्यम्
- वैषम्यनैर्घृण्ये न सापेक्षत्वात् तथा हि दर्शयति
- न कर्माविभागादिति चेन्नाऽनादित्वादुपपद्यते चाप्युपलभ्यते च
- सर्वधर्मोपपत्तेश्च

**न प्रयोजनवत्त्वात्** इति-

ननु नित्यावाप्तसमस्तकामः परः कर्त्तः प्रवृत्तेः प्रयोजनवत्त्वादिति।

**लोकवत्तु लीलाकैवल्यम्** इति-

तत्रोच्यते, परस्यैतद्रचनादिलोकप्रसिद्धनृपत्यादिक्रीडामात्रमिव युज्यते।

**वैषम्यनैर्घृण्ये न सापेक्षत्वात् तथाहि दर्शयति** इति-

विषमसृष्टिसंहारादिनिमित्तवैषम्यनैर्घृण्ये जीवकर्मसापेक्षत्वात् पर्जन्यस्येव जगज्जन्मादिकर्त्तुर्न स्यातां, तथैव दर्शयति "पुण्यो वै पुण्येन कर्मणा पापः पापेने"[78] ति श्रुतिः।

**न कर्माविभागादिति चेन्नानादित्वादुपपद्यते चाप्युपलभ्यते च** इति-

ननु "सदैव सौम्येदमग्र आसीदेकमि"[79] ति सृष्टेः प्रागविभागश्रवणात् कर्मसापेक्षत्वं परस्य न सङ्गच्छते, इति चेन्न कर्मणां पूर्वसृष्टिस्थजीवकृतानामनादित्वात् तदानीमपि सत्त्वात्

---

[78] -बृहदारण्यक् ३.२.१३॥

[79] -छान्दोग्य- ६.२.१ ॥

पूर्वसृष्टेरपि, अकस्मादुत्तरसृष्ट्यनुपपत्योपपद्यते च। "सूर्याचन्द्रमसौ धाता यथा पूर्वमकल्पयत्" इत्यादावुपलभ्यते वापि।

**सर्वधर्मोपपत्तेश्च** इति-

ये ये धर्मा: कारणे प्रसिद्धास्तेषां सर्वेषां कारणधर्माणां ब्रह्मण्येवोपपत्तेश्चाविरोधसिद्धि: इति प्रतिपादितम्। तदेतं प्रथमपादे प्रथमाध्यायोक्त: परब्रह्मणि वेदान्तवाक्यानां समन्वय: समीचीन:। एवं सांख्यस्मृतीनां गौणार्थत्वं स्वीकार्यम् अत: सांख्यस्य स्मृतिविरोध: परिहृत:। सर्वज्ञ: स्वाभाविकाचिन्त्यानन्तयावदात्मवृत्तिशक्तिगुणाद्याश्रयो ब्रह्मरुद्रेन्द्रप्रकृति-परमाणुकालकर्मस्वभावादिनियन्ता दोषास्पृष्टसीमा चिदचित्स्वाभाविकभिन्नाभिन्नत्वाश्रयो भगवान् वासुदेव: श्रीपुरुषोत्तम:। एवं निखिल: जगतजन्मादि कारणभूत: इति कौस्तुभप्रभायां अद्वैतवेदान्तस्य निराकरणपूर्वकम् निम्बार्कदर्शनदिशा भेदाभेदवाद: युक्तियुक्त: इति प्रतिपादितम्।

### ❖ द्वितीयपादस्य वेदान्तकौस्तुभप्रभायाः समीक्षणम् द्वितीयखण्डः-

सम्प्रति द्वितीयपादः विशेषतः सांख्यानां तार्किकाणां बौद्धानां जैनानां पाशुपतादीनां मतानां निराकरणार्थम् प्रवृत्तः। अतः कौस्तुभप्रभायां अनेन मंगलाचरणेन द्वितीयपादः प्रवर्तते।

सांख्यतार्किकबौद्धैश्च जैनैः पाशुपतादिभिः।

दुर्विज्ञेयं गुरुं कृष्णं निम्बार्कं समुपाश्रये॥

अस्मिन पादे नव अधिकरणानि सन्ति तानि च एतानि-

- **रचनानुपपत्त्यधिकरणम्**
- **महद्दीर्घाधिकरणम्**
- **इतरव्यपदेशाधिकरणम्**
- **समुदायाधिकरणम्**
- **उपलब्ध्यधिकरणम्**
- **सर्वथानुपपत्त्यधिकरणम्**
- **एकस्मिन्नसम्भवाधिकरणम्**
- **पशुपत्यधिकरणम्**
- **उत्पत्त्यसम्भवाधिकरणम्**

इति-

### द्वितीयोऽध्यायस्य द्वितीयपादे रचनानुपपत्त्यधिकरणम्-

अस्मिनधिकरणे दश सूत्राणि सन्ति तानि च -

- रचनानुपपत्तेश्च नानुमानम्

- प्रवृत्तेश्च
- पयोऽम्बुवच्चेत् तत्रापि
- व्यतिरेकानवस्थितेश्चानपेक्षत्वात्
- अन्यत्राभावाच्च न तृणादिवत्
- अभ्युपगमेऽप्यर्थाभावात्
- पुरुषाश्मवदिति चेत् तथापि
- अङ्गित्वानुपपत्तेश्च
- अन्यथानुऽमितौ च ज्ञशक्तिवियोगात्
- विप्रतिषेधाच्चासमञ्जसम्

**रचनानुपपत्तेश्च नानुमानम्** इति-

जगद्धेतुतयानुमीयत इत्यनुमानं प्रधानं न जगत्कारणम्। कुतः? रचनानुपपत्तेः। तत्स्वभावाभिज्ञचेतनानधिष्ठितं प्रधानं न विचित्रजगद्रचनासमर्थम्, अचेतनत्वात्। रथप्रसादादिरचनाहेतुभूतकेवलदार्वादिवदिति। चशब्देनान्वयानुपपत्तिः समुच्चीयते। नहि बाह्या रूपादयः सुखदुःखमोहिता अवभासन्ते। सुखादीनां वित्तधर्मत्वेन प्रतिपुरुषमन्तरेव सम्पद्यमानत्वात्। न बाह्यार्थाकरातयानुगताः सुखादयः सम्पद्यन्ते चेतनस्य। आत्मीयवासनानुसारेण बाह्यविषयनिमित्तास्तूत्पद्यन्त इति। न च सत्त्वादेश्चान्वितस्य द्रव्यगुणत्वेन शौक्ल्यादेरिवोपादानकारणत्वासम्भवात्। न च सत्त्वादीन्यपि द्रव्याणि। तेषां द्रव्यगुणतया प्रसिद्धेः। शक्तितः प्रवृत्तेरित्यादिहेतवस्तु ब्रह्मण्युपपद्यन्ते, तस्याप्यपरिमितत्वात्। जगतस्तदधीनस्थितिपृत्तित्वाज्जगदुत्पत्तिलयवत्त्वादिति।

प्रधानमनुमानगम्यं न जगत्कारणम् कुतः? सृज्यरचनानभिज्ञात्ततो विविधरचनानुपपत्तेश्च।

**प्रवृत्तेश्च** इति-

स्वत: प्रवृत्त्यनुपपत्तेश्च नानुमानम्।

**पयोऽम्बुवच्चेत् तत्रापि** इति-

ननु क्षीरादिवत् स्वयं प्रधानं जगज्जनमादौ प्रवर्त्तते इति चेत्, तत्रापि पर: प्रेरको "योऽप्सु तिष्ठन्नि" त्यादिना श्रूयते।

**व्यतिरेकानवस्थितेश्चानपेक्षत्वात्** इति-

प्राज्ञेनानधिष्ठितं प्रधानं न जगत्कारणं कुत:? तद्व्यतिरिक्तस्य सहकार्यान्तरस्यानवस्थितेर्यतस्तव तदनपेक्षत्वात्।

**अन्यत्राभावाच्च न तृणादिवत्** इति-

अनडुहाद्युपभुङ्क्ते तृणादौ क्षीराकारेण परिणामाभावात् धेन्वाद्युपभुक्तं तृणादि यथा स्वत: क्षीरीभवति तथाऽव्यक्तमपि महदाद्यकारेण परिणमते इति न वक्तव्यम्।

**अभ्युपगमेऽप्यर्थाभावात्** इति-

कथञ्चित् प्रवृत्त्यभ्युपगमेऽपि प्रधानकारणं न भवति, तस्याऽचेततनत्वेन प्रवृत्तिप्रयोजनासम्भवात्।

**पुरुषाश्मवदिति चेत् तथापि** इति-

यथा पङ्गुरन्धमश्माप: प्रवर्त्तयति तथा पुरुष: प्रधानमिति चेत्तथात्वे निष्क्रियत्वाभ्युपगमविरोध:। प्रधानस्य परप्रेर्यत्वेन जगत्कारणत्वेऽप्राधान्यप्रसंग:।

**अङ्गित्वानुपपतेश्च** इति-

प्रलये वेलायां साम्येनावस्थितानां गुणानां परस्पराङ्गाङ्गिभावासम्भवाच्च नानुमानं जगत्कारणम्।

**अन्यथानुमितौ च ज्ञशक्तिवियोगात्** इति-

अन्यथा अनुमितौ च प्रकारान्तरेण प्रधानानुमितौ च प्रधानस्य ज्ञातृत्वशक्तिवियोगान्न तत्कर्तृकं जगत्।

**विप्रतिषेधाच्चासमञ्जसम्** इति-

असमञ्जसं कापिलमतं वेदान्तविरुद्धत्वात् पूर्वापरविरुद्धत्वाच्च इति निरूपोतम्।

**द्वितीयोऽध्यायस्य द्वितीयपादे महद्दीर्घाधिकरणम्-**

अस्मिनधिकरणे सप्तसूत्राणि सन्ति यत् निम्नः-

- महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम्
- उभयथापि न कर्मातस्तदभावः
- समवायाभ्युपगमाच्च साम्यादनवस्थितेः
- नित्यमेव च भावात्
- रूपादिमत्त्वाच्च विपर्ययो दर्शनात्
- उभयथा च दोषात्
- अपरिग्रहाच्चात्यन्तमनपेक्षा

**महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम्** इति-

सावयवत्वेऽनवस्थाप्रसङ्गान्निरवयवत्वे परिणामान्तरोत्पादकत्वासम्भवात् परमाणुभ्यां द्व्यणुकोत्पत्तेरसामञ्जस्यं, तेभ्यस्त्र्यणुकोत्पत्तेश्च सुतरामसामञ्जस्यं तद्वत्परमाणु कारणवाद्यभ्युपगतं सर्वमसमञ्जसं भवति।

**उभयथापि न कर्मातस्तदभावः** इति-

अदृष्टस्य परमाणुवृत्तित्वासम्भवादात्मसम्बन्धिनस्तस्य परमाणुगतकर्मप्रेरकत्वासम्भवाच्चेत्येवमुभयथाऽप्याद्यं कर्म परमाणुगतं न सम्भवत्यतः कर्मनिबन्धनसंयोगपूर्वकद्व्यणुकादिक्रमेण जगदुद्भवस्याभावः।

**समवायाभ्युपगमाच्च साम्यादनवस्थितेः** इति-

समवायाभ्युपगमाच्च परमाणुकारणपक्षासम्भव यथा द्व्यणुकं समवायसम्बन्धेन स्वकारणे समवैत्यत्यन्तभिन्नत्वात्तथा समवायोऽपि समवायिभ्यां समवायसम्बन्धान्तरेण सम्बध्येतात्यन्तभेदसाम्यात् सोऽपि सम्बन्धान्तरेणेत्यनवस्थानात्।

**नित्यमेव च भावात्** इति-

परमाणूनां प्रवृत्तिस्वभावत्वे प्रवृत्तेर्भावान्नित्यसृष्टिप्रसंगादन्यथा नित्यप्रलयप्रसंगात्तदभावः

**रूपादिमत्त्वाच्च विपर्ययो दर्शनात्** इति-

परमाणूनां कार्यानुसारेण रूपादिमत्त्वाच्च नित्यत्वविपर्ययोऽनित्यत्वं स्यात्, रूपादिमतां, घटादीनामनित्यत्वदर्शनादन्यथा कार्यं रूपादिहीनं स्यात्।

**उभयथा च दोषात्** इति-

यद्युपचितगुणाः परमाणवस्तदा पृथिव्यप्तेजोवायुनां तुल्यतापत्तिरपचितगुणा पृथिव्यादीनामपि इत्यत्रापि सर्वेषां परमाणुनां प्रत्येकमेकैकगुणयोगेन कारणगुणानुगुणेन प्रत्येकमेकैकगुणयोगः स्यादित्युभयथापि दोषात्तदभाव एव।

**अपरिग्रहाच्चात्यन्तमनपेक्षा** इति-

परमाणुकारणवादस्य शिष्टैः परित्यक्तवादत्यन्तमुपेक्षा मुमुक्षुभिः कार्या इति निरूपितम्।

**द्वितीयोऽध्यायस्य द्वितीयपादे इतरव्यपदेशाधिकरणम्-**

अस्मिनधिकरणे एकमेव सूत्रमस्ति-

**समुदाये उभयहेतुकेऽपि तदप्राप्तिः** इति-

सुगतमतं निराकरोति। भूतभौतिकचित्तचैत्तिके समुदायेऽभ्युपगम्यमानेऽपि समुदायिनामचेतनत्वादन्यस्य संहतिहेतोरनभ्युपगमाच्च समुदायासम्भवः।

**द्वितीयोऽध्यायस्य द्वितीयपादे समुदायाधिकरणम्-**

अस्मिनधिकरणे नवसूत्राणि सन्ति-

- इतरेतरप्रत्ययत्वादुपपन्नमिति चेन्न, सङ्घातभावाऽनिमित्तत्वात्
- उत्तरोत्पादे च पूर्वनिरोधात्
- असति प्रतिज्ञोपरोधो यौगपद्यमन्यथा
- प्रतिसंख्याऽप्रतिसंख्याननिरोधाऽप्राप्तिरविच्छेदात्
- उभयथा च दोषात्
- आकाशे चाविशेषात्
- अनुस्मृतेश्च
- नासतोऽदृष्टत्वात्
- उदासीनानामपि चैवं सिद्धिः

**इतरेतरप्रत्ययत्वादुपपन्नमिति चेन्न, सङ्घातभावाऽनिमित्तत्वात्** इति-

अविद्यासंस्कारविज्ञाननामरूपषडायतनादीनामितरेतरहेतुत्वेन संघातादिकमुपपन्नमित्यपि न, तेषामपि संघातं प्रत्यकारणत्वात्।

**उत्तरोत्पादे च पूर्वनिरोधात्** इति-

इतोऽपि न तद्दर्शनं युक्तम्, उत्तरोत्पादे पूर्वस्य क्षणिकत्वेन विनष्टत्वात्।

**उत्तरोत्पादे च पूर्वनिरोधात्** इति-

इतोऽपि न तद्दर्शनं युक्तम्, उत्तरोत्पादे पूर्वस्य क्षणिकत्वेन विनष्टत्वात्।

**असति प्रतिज्ञोपरोधो यौगपद्यमन्यथा** इति-

असति हेतौ कार्योत्पत्त्यभ्युपगमे चतुर्भ्यो हेतुभ्य इन्द्रियालोकमनस्कारविषयेभ्यो विज्ञानोत्पत्तिरित्यस्याः प्रतिज्ञाया बाधः स्यात् सति हेतौ कार्योत्पादाङ्गीकारे पूर्वस्मिन् क्षणे स्थिते सति क्षणान्तरोत्पत्तिर्भवेदिदं यौगपद्यं भवतां क्षणिकवादिनां मते स्यात्।

**प्रतिसंख्याऽप्रतिसंख्यानिरोधाप्राप्तिरविच्छेदात्** इति-

सहेतुकनिर्हेतुकयोर्निरोधयोरसम्भवः सन्तानविच्छेदस्यासम्भवात्, सन्तानिनाञ्च प्रत्यभिज्ञायमानत्वाच्च।

**उभयथा च दोषात्** इति-

सन्तानस्य सन्तानिव्यतिरिक्तवस्तुत्वाभावात् सन्तानिनाञ्च क्षणिकत्वात्, अविद्यादिनिरोधो मोक्ष इत्यपि तन्मतमसंगतम्।

**आकाशे चाविशेषात्** इति-

आकशे च तैरभावप्रतिज्ञा कृता सा न युक्ता पृथिव्यादिभिरविशेषात्।

**अनुस्मृतेश्च** इति-

इदं तदिति प्रत्यभिज्ञा च तद्दर्शनमसत्।

**नासतोऽदृष्टत्वात्** इति-

सौगतैरभावाद्भावोत्पत्तिरभ्युपेता, सा न युक्ता। कस्मात्? असतः मृदाद्यभावात् घटाद्युत्पत्तेरदृष्टत्वात्। सतस्तु मृत्पिण्डादेस्तदुत्पत्तेर्दृष्टत्वात्।

**उदासीनानामपि चैवं सिद्धिः** इति-

अन्यथाऽनुपायतो विद्याद्यर्थसिद्धिः स्यात्

**द्वितीयोऽध्यायस्य द्वितीयपादे उपलब्ध्यधिकरणम्-**

अस्मिनधिकरणे चत्वारिसूत्राणि सन्ति-

- नाभाव उपलब्धेः
- वैधर्म्याच्च न स्वप्नादिवत्
- न भावोऽनुपलब्धेः
- क्षणिकत्वाच्च

**नाभाव उपलब्धेः** इति-

विज्ञानमात्रस्तित्ववाद्यभिमतो बाह्यस्याभावो न किन्तु भाव एव। कुतः? उपलब्धेः।

**वैधर्म्याच्च न स्वप्नादिवत्** इति-

स्वप्नादिप्रत्ययदृष्टान्तेनापि न जाग्रत्प्रत्ययार्थाभावः प्रतिपादयितुं शक्यः दृष्टान्तदार्ष्टान्तयोर्वैषम्यात् स्वप्नज्ञानस्यापि सावलम्बनाच्च।

**न भावोऽनुपलब्धेः** इति-

किञ्च ज्ञानवैचित्र्यार्थो वासनानां भावोऽभिप्रेतः, स न सम्भवति तव मते बाह्यार्थानामनुपलब्धेः।

**क्षणिकत्वाच्च** इति-

न वासनाभाव आश्रयस्य तव मते क्षणिकत्वात्।

**द्वितीयोऽध्यायस्य द्वितीयपादे सर्वथानुपपत्त्यधिकरणम्-**

अस्मिनधिकरणे एकमेव सूत्रमस्ति।

**सर्वथानुपपत्तेश्च** इति-

शून्यवादोऽपि भ्रान्तिमूलः। सर्वथानुपपन्नत्वात्। प्रत्यक्षादिप्रमाणविरोधात् इति निरूपितम्।

**द्वितीयोऽध्यायस्य द्वितीयपादे एकस्मिन्नसम्भवाधिकरणम्-**

अस्मिनधिकरणे चत्वारि सूत्राणि सन्ति-

- नैकस्मिन्न सम्भवात्
- एवं चात्माऽकार्त्स्न्यम्
- न च पर्यायादप्यविरोधो विकारादिभ्यः
- अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषः

**नैकस्मिन्नसम्भवात्** इति-

जैनावस्तुमात्रेऽस्तित्वनास्तित्वानादिविरुद्धधर्मद्वयं योजयन्ति, तन्नोपपद्यते। एकस्मिन् वस्तुनि सत्त्वासत्त्वादेर्विरुद्धधर्मद्वयं छायातपवत् युगपदसम्भवात्।

**एवं चात्माऽकार्त्स्न्यम्** इति-

एवं शरीरपरिमाणत्वेनाङ्गीकृतस्यात्मनो बृहद्देहप्राप्तावपूर्णता स्यात्।

**न च पर्यायादप्यविरोधो विकारादिभ्यः** इति-

"न च वाच्यं सावयवो हि खल्वस्माकमात्मा, तस्यावयवानां गजशरीरे उपचयः सूक्ष्मशरीरेऽपचयश्चेत्येवं पर्यायादविरोध इति। कुतः "विकारादिभ्यः" विकारादिदोषप्रसङ्गात्। यदि भवन्मते आत्मा सावयवस्तर्हि देहादिवद्विकारी स्यादनित्यश्च स्यात्"।

**अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषः** इति-

अन्त्यस्य परिमाणस्य नियततामङ्गीकृत्यादिमध्ययोरपि नित्यत्वमस्तीति चेत्तर्हि सर्वत्राविशेषः स्याद्विनष्टो देहपरिमाणवादः इति जैनमतखण्डनाधिकरणम्।

**द्वितीयोऽध्यायस्य द्वितीयपादे पशुपत्यधिकरणम्-**

अस्मिन पादे पञ्चसूत्राणि सन्ति यत् निम्नः-

- पत्युरसामञ्जस्यात्
- सम्बन्धानुपपत्तेश्च
- अधिष्ठानानुपपत्तेश्च
- करणवच्चेन्न भोगादिभ्यः
- अन्तवत्त्वमसर्वज्ञता वा

**पत्युरसामञ्जस्यात्** इति-

पाशुपतं शास्त्रमुपेक्षणीयं जगदभिन्ननिमित्तोपादानकारणप्रतिपादकवेदविरोधित्वादुपधर्मप्रवर्त्तकत्वाच्च।

**सम्बन्धानुपपत्तेश्च** इति-

पशुपतेशरीरस्य प्रेरकस्य प्रेर्यप्रधानादिभिः सम्बन्धानुपपत्तेश्च न पशुपतिर्जगद्धेतुः।

**अधिष्ठानानुपपत्तेश्च** इति-

दृष्टविरुद्धत्वान्नित्यस्योत्तरभावित्वादनित्यस्य च शरीरस्यानुपपत्तेश्च न पशुपतिर्जगद्धेतुः।

**करणवच्चेन्न भोगादिभ्यः** इति-

जीववत्करणकलेवरकल्पनापि न सम्भवति भोगादिप्रसक्तेः।

**अन्तवत्त्वमसर्वज्ञता वा** इति-

तस्य पुण्यादिरूपादृष्टयोगेऽन्तवत्त्वमज्ञत्वं च स्यात् इति पाशुपतमतखण्डनाधिकरणम् निरूपितम्।

**द्वितीयोऽध्यायस्य द्वितीयपादे उत्पत्यसम्भवाधिकरणम्-**

अस्मिनधिकरणे चत्वारिसूत्राणि सन्ति यत निम्नः-

- उत्पत्त्यसम्भवात्
- न च कर्त्तुः करणाम्
- विज्ञानादिभावे वा तदप्रतिषेधः
- विप्रतिषेधाच्च

**उत्पत्त्यसम्भवात्** इति-

पुरुषान्तरेणशक्तेः सकाशाज्जगदुत्पत्त्यसम्भवात् न तत्कारणवादोऽपि साधुः

**न च कर्तुः करणम्** इति-

पुरुषसंसर्गोऽस्ति, इति चेत् पुरुषस्य करणम् नास्ति तदानीम्।

**विज्ञानादिभावे वा तदप्रतिषेधः** इति-

स्वाभाविक विज्ञानादिभावेऽङ्गीकृते तु तदप्रतिषेधः, स्वतो विनष्टः शक्तिवादः ब्रह्मस्वीकारात्।

**विप्रतिषेधाच्च** इति-

श्रुतिस्मृतिविप्रतिषेधाच्च शक्तिपक्षोऽप्रामाणिकः इति शक्तिवादखण्डनाधिकरणम् इति वेदान्तदर्शने तदेवं द्वितीयपादे द्वितीयाध्याये वेदान्तकौस्तुभप्रभामाश्रित्य प्रथमाध्यायोक्तस्य परब्रह्मणिवासुदेवे श्रीपुरुषोत्तमे वेदावाक्यानां समन्वस्य प्रतिपक्षभूतानां सांख्यानां न्यायवैशेषिकाणां बौद्धानां जैनानां पाशुपतमतानां श्रुति विरुद्धत्वं युक्तिविरुद्धत्वं च प्रतिपादितम्।

द्वितीयोऽध्यायस्य द्वितीयपादः समाप्तः

## ❖ तृतीयपादस्य वेदान्तकौस्तुभप्रभायाः समीक्षणम् तृतीयखण्डः

सम्प्रतिविप्रतिषेधात् यथा सांख्यनैयायिकादीनां बौद्धजैनादीनाञ्च मतानां द्वितीयपादे निराकृतम्। सम्प्रति वेदान्तेष्वपि परस्परमविप्रतिषेधः दृश्यते यथा क्वचिद्शाखायां आकाशास्योत्पत्तिः श्रूयते क्वचिद् न श्रूयते अतः वेदान्तानामपि प्रामाण्यम् न स्यात् इति आक्षेपस्‌य निराकर्णार्थम् तृतीयपादः प्रवृत्तः। अतः कौस्तुभप्रभायां वैदिके स्वपक्षे विप्रतिषेधादिदोषगन्धस्पर्शाभावप्रदर्शनायापरः प्रपञ्च आरभ्यते। इति प्रतिज्ञया तृतीयपादः आरब्धः।

अस्मिन पादे द्वादशाधिकरणानि सन्ति तानि च-

- **वियदधिकरणम्**
- **मातरिश्वाधिकरणम्**
- **असम्भवाधिकरणम्**
- **तेजोऽधिकरणम्**
- **विपर्य्ययाधिकरणम्**
- **अन्तराविज्ञानाधिकरणम्**
- **आत्माधिकरणम्**
- **ज्ञात्वधिकरणम्**
- **उत्क्रान्त्यधिकरणम्**
- **कर्त्रधिकरणम्**
- **परायत्ताधिकरणम्**
- **अंशाधिकरणम्**

## द्वितीयोऽध्यायस्य तृतीयपादे वियदधिकरणम्-

अस्मिनधिकरणे षट् सूत्राणि सन्ति तानि च-

- न वियदश्रुतेः
- अस्ति तु
- गौण्यसम्भवाच्छब्दाच्च
- स्याच्चैकस्यापि ब्रह्मशब्दवत्
- प्रतिज्ञाहानिरव्यतिरेकाच्छब्देभ्यः
- यावद्विकारं तु विभागो लोकवत्

**न वियदश्रुतेः** इति-

परपक्षेण स्वपक्षस्याऽविरुद्धत्वं निरूपितमधुना श्रुतीनामन्योऽन्यविरोधाऽभावा निरूप्यते। वियन्नोत्पद्यते। कुतः? छान्दोग्ये तदुत्पत्त्यश्रवणादिति पूर्वपक्षः।

**अस्ति तु** इति-

तत्रोच्यते "आत्मनः आकाशः सम्भूतः"[80] इति तैत्तिरीयकेऽस्ति वियदुत्पत्तिरिति।

**गौण्यसम्भवाच्छब्दाच्च** इति-

शङ्कते, निरवयवस्याकाशस्योत्पत्त्यऽभावात् "वायुश्चान्तरिक्षश्चैतदमृतमि"-ति शब्दाच्च आकाशः सम्भूतः इति श्रुतिर्गौणी।

**स्याच्चैकस्यापि ब्रह्मशब्दवत्** इति-

---

[८०] - तैत्तिरीय २.१.१ ॥

एकस्य संभूतशब्दस्याकाशे गौणत्वमुत्तरत्र मुख्यत्वं तु "तपसा ब्रह्म विजिज्ञासस्व तपो ब्रह्मे" ति वत् स्यात्।

**प्रतिज्ञाहानिरव्यतिरेकाच्छब्देभ्य: इति-**

शङ्कानिराक्रियते, आकाशादिवस्तुजातस्य ब्रह्माऽव्यतिरेकाद्ब्रह्मविज्ञानात् सर्वविज्ञानप्रतिज्ञाया: अनुपरोधो भवति। आकाशस्यानुत्पन्नत्वे तु सविज्ञेयव्यतिरेक: स्यात्, तस्मात् सा बाध्येत, सर्वस्य ब्रह्मापृथक्त्वं च "ऐतदात्म्यमिदमि"[81] त्यादिशब्देभ्य:।

**यावद्विकारं तु विभागो लोकवत् इति-**

उपसंहरति, "ऐतदात्म्यमिदं सर्वमि"[82] त्यादिवक्यैराकाशादिप्रपञ्चस्य ब्रह्मात्मकत्वप्रतिपादनेन विकारत्वं निश्चीयते, तथा च यावद्विकारमुद्भव एव गम्यते "तत्तेजोऽसृजते"[83] त्याद्याकाशस्यानुक्तिस्तेज आदे: सृज्यत्वेनोक्तिश्च लोकवदुपपद्यते। लोके देवदत्तपुत्रपूगं निर्दिश्य, तत्र कतिपयानामुत्पत्तिकथनेन सर्वेषामुत्पत्तिरुक्ता भवति।

**द्वितीयोऽध्यायस्य तृतीयपादे मातरिश्वाधिकरणम्-**

अस्मिनधिकरणे एकमेव सूत्रमस्ति-

**एतेन मातरिश्वा व्याख्यात: इति-**

अनेन वियदुत्पत्तिन्यायेन वायुरपि। व्याख्यात:।

---

[81] - छान्दोग्या० ६.८.७ ॥

[82] - छान्दोग्या० ६.८.७ ॥

[83] - छान्दोग्या० ६.२.३ ॥

**द्वितीयोऽध्यायस्य तृतीयपादे असम्भवाधिकरणम्-**

अस्मिनधिकरणे एकमेव सूत्रमस्ति-

**असम्भवस्तु सतोऽनुपपत्तेः** इति-

सतो ब्रह्मणोऽसम्भवोऽनुत्पत्तिरेव जगत्कारणोत्पत्त्यनुपपत्तेः।

**द्वितीयोऽध्यायस्य तृतीयपादे तेजोऽधिकरणम्-**

अस्मिनधिकरणे पञ्चसूत्राणि सन्ति तानि च-

- तेजोऽतस्तथा ह्याह
- आपः
- पृथिवी
- पृथिव्यधिकाररूपशब्दान्तरेभ्यः
- तदभिध्याना तु तल्लिङ्गात् सः

**तेजोऽतस्तथा ह्याह** इति-

पूर्वपक्षयति "मातिरिस्वनस्तेजो जायते वायोरग्निरि" ति श्रुतेः।

**आपः** इति-

तेजस आपो जायन्ते "अग्नेराप" इति श्रुतेः।

**पृथिवी** इति-

"अद्भ्यो भूर्भवति" "ता अन्नमसृजन्ते" ति श्रुतेः।

**पृथिव्यधिकाररूपशब्दान्तरेभ्यः** इति-

अन्नपदेन भूरुच्यते महाभूताधिकारात्। "यत् कृष्णं तदन्नस्येति रूपश्रवणात्" "अद्ध्यः पृथिवी" ति शब्दान्तराच्च।

**तदभिध्यानादेव तु तल्लिङ्गात् सः** इति-

सिद्धान्तयति, "बहुस्यामि"-ति तदभिध्यानात् "तदात्मानं स्वयमकुरुत" इत्यादि तज्ज्ञापकात् शास्त्राच्च परमपुरुषस्तदन्तरात्मा तत्कार्यस्रष्टेति।

## द्वितीयोऽध्यायस्य तृतीयपादे विपर्ययाधिकरणम्-

अस्मिनधिकरणे एकमेव सूत्रमस्ति-

**विपर्ययेण तु क्रमोऽत उपपद्यते च** इति-

अत उक्तसृष्टिक्रमात् प्रातिलोम्येन प्रलयक्रमोऽस्ति "पृथिव्यप्सु प्रलीयते" इत्यादि श्रुतेः। जललवणान्यायेनोपपद्यते च।

## द्वितीयोऽध्यायस्य तृतीयपादे अन्तराविज्ञानाधिकरणम्-

अस्मिनधिकरणे एकमेव सूत्रमस्ति-

**अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादिति चेन्नाविशेषात्** इति-

विज्ञानमनसी, "एतस्माजयते प्राणो मनः सर्वेन्द्रियाणी चे"[84]-त्यादिलिङ्गात् परमात्मानः भूतानां चान्तराले स्यातामेवं प्राप्तेन क्रमेण पूर्वोक्तस्य क्रमस्य विरोध इति चेन्न, वाक्यस्य क्रमविशेषपरत्वाभावात् "एतस्माज्जायते प्राणः मनः सर्वेन्द्रियाणि चे"[85]-त्यनेन ब्रह्मणः सकाशादेव विज्ञानमनसोः खादीनां चोत्पत्तेरविशेषात्। भूतोत्पत्तिरविशेषात्। प्रकृतेर्भूतोत्पत्तिक्रमप्रतिपादके वाक्ये "तस्माद्वा एतस्मादात्मनः

---

[84] - मुण्डक० २.१.३ ॥

[85] - मुण्डक० २.१.३ ॥

आकाश: संभूत: आकाशाद्वायुरि"[86] त्यादौ आत्मन आकाशस्य चान्तराले सृष्टिसंहारक्रमबोधवाक्यान्तरप्रसिद्धानि विज्ञानमनसीत्यनेनोपलक्षितानि अव्यक्तमहदहङ्कारादीनि तत्त्वानि ज्ञेयानीति संक्षेप:।

**द्वितीयोऽध्यायस्य तृतीयपादे आत्माधिकरणमाधिकरणम्-**

अस्मिनधिकरणे द्वे सूत्रे स्त: ते च-

- चराचरव्यपाश्रयस्तु स्यात्, तद्व्यपदेशो भाक्तस्तद्भावभावित्वात्
- नात्माऽश्रुतेर्नित्यत्वाच्च ताभ्य:

**चराचरव्यपाश्रयस्तु स्यात्, तद्व्यपदेशो भाक्तस्तद्भावभावित्वात्** इति-

जीवात्मा निर्णीयते "देवदत्तो जातो मृत:" इति व्यपदेशो गौणोऽस्ति। यत: चराचरव्यपाश्रय:। शरीरभावे जन्ममरणयोर्भावित्वात्।

**नात्माऽश्रुतेर्नित्यत्वाच्च ताभ्य:** इति-

जीवात्मा नोत्पद्यते कुत:? स्वरूपतस्तदुत्पत्तिवचनाभावात् "न जायते म्रियते वा विपश्चित्"[87] "नित्यो नित्यानां"[88] "अजो ह्येको जुषमाणोऽनुशेते"[89] इत्यादिश्रुतिभ्यो जीवस्य नित्यत्वावगमाच्च।

**द्वितीयोऽध्यायस्य तृतीयपादे ज्ञाधिकरणमाधिकरणम्-**

अस्मिनधिकरणे एकमेव सूत्रमस्ति यत् निम्न:

**ज्ञोऽत एव** इति-

---

[86] - तैत्तिरीय २.१ ॥

[87] - कठो० २.७ ॥

[88] - कठो० ५.१३ ॥

[89] - श्वेताश्व ४.५ ॥

अहमर्थभूत आत्मा ज्ञाता भवति।

## द्वितीयोऽध्यायस्य तृतीयपादे उत्क्रान्त्यधिकरणम्-

अस्मिनधिकरणे त्रयोदशाध्यायस्याधिकरणानि सन्ति तानि च-

- उत्क्रान्तिगत्यागतीनाम्
- तस्मादणुपरिमाणक एवेति
- स्वात्मना चोत्तरयो:
- नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात्
- स्वशब्दोनमानाभ्यां च
- अविरोधश्चन्दनवत्
- अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमाद्धृदि हि
- गुणाद्वा लोकवत्
- व्यतिरेको गन्धवत् तथा च दर्शयति
- पृथगुपदेशात्
- तद्गुणसारत्वात् तु तद्व्यपदेश: प्राज्ञवत्
- यावदात्मभावित्वाच्च न दोषास्तद्दर्शनात्
- पुंस्त्वादिवत् तस्य सतोऽभिव्यक्तियोगात्
- नित्योपलब्ध्यनुपब्धिप्रसङ्गोऽन्यतरनियमो वान्यथा

**उत्क्रान्तिगत्यागतीनाम्** इति-

जीवोऽणु: "तेन प्रद्योतनेन एष आत्मा निष्क्रामति चक्षुषो वा मूर्ध्नो वा अन्येभ्यो वा शरीरदेशेभ्य:" "ये वै केचनास्माल्लोकात् प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ति"[90] "तस्माल्लोकात् पुनरेत्याऽस्मै लोकाय कर्मणे" इत्युत्क्रान्तिगत्यागतीनां श्रवणात्।

**तस्मादणुपरिमाणक एवेति** इति-

**स्वात्मना चोत्तरयो:** इति-

उत्क्रान्ति: कदाचित् स्थिरस्यापि ग्राम्यस्वाम्यनिवृत्तिवत् स्यात्, उत्तरयो: स्वात्मनैव सम्भवान्जीवोऽणु:।

**नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात्** इति-

जीवं प्रस्तुत्य "स वा एष महान्"[91] इत्येतद्वचनात् न जीवोऽणुरिति चेन्न मध्ये परमात्मनोऽधिकारात्।

**स्वशब्दोन्नमानाभ्यांश्च च** इति-

"एषोऽणुरात्मा, बालाग्रशतभागस्य शतधा कल्पितस्य च भागो जीव"[92] इति स्वशब्दोन्मानाभ्यां जीवोऽणु:।

**अविरोधश्चन्दनवत्** इति-

देहैकदेशस्थोऽपि कृत्स्नं देहं चन्दनविन्दुर्यथाऽह्लादयति, तथा जीवोऽपि प्रकाशयति, अत: कृत्स्नशरीरे सुखाद्यनुभवो न विरुध्यते।

**अवस्थितिवैशेष्यादिति चेन्नाऽभ्युपगमाद्धृदि हि** इति-

---

[90] - कौषीतकि- १.२ ॥
[91] - वृहदारण्यक् ४.४.२२ ॥
[92] - मुण्डक ४.९ ॥

अवस्थितिविशेषभावात् दृष्टातवैषम्यम् इति चेन्न देहैकदेशे हरिचन्दनवत् "हृदि ह्येष आत्मा"[93] इति जीवस्थित्यभ्युपगमात्।

**गुणाद्वा लोकवत्** इति-

देहे प्रकाशो जीवगुणादेव कोष्ठे दीपालोकादिवत्।

**व्यतिरेको गन्धवत् तथा हि दर्शयति** इति-

गुणभूतस्य ज्ञानस्य व्यतिरेकस्तु गन्धवदुपपद्यते अल्पदेशस्थात् पुष्पात् गन्धस्य अधिकदेशवृत्तित्ववत् उपपद्यते, एतादृशगुणाश्रयं जीवं "स एष प्रविष्ट आलोमेभ्य आनखेभ्य:"[94] इति श्रुतिर्दर्शयति।

**पृथगुपदेशात्** इति-

जीवतज्ज्ञानयोर्ज्ञानत्वाविशेषेऽपि धर्मधर्मिभावो युक्त एव। कुत:? "प्रज्ञया शरीरमारुह्ये"[95] त्यादि पृथगुपदेशात्।

**तद्गुणसारत्वात् तु तद्व्यपदेश: प्राज्ञवत्** इति-

बृहन्तो गुणा यस्मिन्निति ब्रह्मेति प्राज्ञवदात्मा विभुगुणत्वा- "नित्यं विभु"[96] मिति व्यपदिष्ट:, दृष्टान्ते बृहदेव प्राज्ञो गुणैरपि बृहद्भवति, दार्ष्टान्ते तु जीवोऽणुपरिमाणाको गुणेन विभुरिति विशेष:।

**यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात्** इति-

---

[93] - प्रश्नो० ३.६ ॥

[94] - बृहदारण्यक० ६.८.१ ॥

[95] - कौषीतकि ब्रा० ३.६ ॥

[96] - मुण्ड० १.१.६ ॥

जीवस्य गुणनिबन्धनो विभुत्वव्यपदेशो न विरुद्धः गुणस्य यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात्। "न हि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते, अविनाशित्वादविनाशी वा अरे! अयमात्मे"[97] ति तद्दर्शनात्।

**पुंस्त्वादिवत् तस्य सतोऽभिव्यक्तियोगात्** इति-

अस्य ज्ञानस्य सुषुप्त्यादौ सत एव जाग्रदादावभिव्यक्तिसम्भवाद्यावदात्मभावित्वमेव। यथा पुंस्त्वादेर्बाल्ये सत एव यौवनेऽभिव्यक्तिः।

**नित्योपलब्ध्यनुपब्धिप्रसङ्गोऽन्यतरनियमो वान्यथा** इति-

अन्यथा सर्वगतात्मवादे आत्मोपलब्ध्यनुपलब्ध्योर्बन्धमोक्षयोर्नित्यं प्रसङ्गः स्यान्नित्यबद्धो वा नित्यमुक्तो वाऽत्मेत्यन्तरनियमो वा स्यात्।

**द्वितीयोऽध्यायस्य तृतीयपादे कर्त्रधिकरणम्-**

अस्मिनधिकरणे अष्टसूत्राणिसन्ति तानि च एतानि-

- कर्त्ता शास्त्रार्थवत्त्वात्
- विहारोपदेशात्
- उपादानात्
- व्यपदेशाच्च क्रियायां न चेन्निर्देशविपर्ययः
- उपलब्धिवदनियमः
- शक्तिविपर्ययात्
- समाध्यभावाच्च
- यथा च तक्षोभयथा

---

[97] -छान्दो० ३.६.९ ॥

**कर्त्ता शास्त्रार्थवत्त्वात्** इति-

आत्मैव कर्त्ता "स्वर्गकामो यजेत मुमुक्षुर्ब्रह्मोपासीते" त्यादेर्भुक्तिमुक्त्युपायबोधकस्य शास्त्रस्य अर्थवत्त्वात्।

**विहारोपदेशात्** इति-

"स्वे शरीरे यथाकामं परिवर्त्तते"[98] इति विहारोपदेशात् स कर्त्ता।

**उपादानात्** इति-

"एवमेवैष एतान् प्राणान् गृहीत्वे"[99]-ति उपादान श्रवणात्

**व्यपदेशाच्च क्रियायां न चेन्निर्देशविपर्ययः** इति-

क्रियायां "विज्ञानं यज्ञं तनुते"[100] इति कर्तृत्वव्यपदेशाच्च आत्मा कर्त्तास्ति, यदि विज्ञानपदेन बुद्धिर्गृह्यते न तु जीवस्तर्हि करणविभक्तिप्रसङ्गः स्यात्।

**उपलब्धिवदनियमः** इति-

फलोपलब्धिक्रियायां नियमो नास्ति।

**शक्तिविपर्ययात्** इति-

बुद्धेः कर्तृत्वे करणशक्तिर्हीयते, कर्तृशक्तिः स्यात्, अतो जीव एव कर्त्ता।

**समाध्यभावाच्च** इति-

आत्मनोऽकर्तृत्वेऽचेतनमात्राव्यतिरिक्तकर्तृकसमाध्यभावप्रसङ्गादात्मा कर्त्ता।

---

[98] - वृहदा० २.१.१८ ॥
[99] - वृहदा० २.१.१८ ॥
[100] - तैत्तिरी० २.५.१ ॥

**यथा च तक्षोभयथा** इति-

आत्मेच्छया यथा तक्षा तथा करोति न करोति इत्युभयथा व्यवस्था सिद्ध्यति, बुद्धेः कर्तृत्वे इच्छाभावाद्यवस्थाऽभावः।

**द्वितीयोऽध्यायस्य तृतीयपादे परायत्ताधिकरणम्-**

अस्मिनधिकरणे द्वे सूत्रे स्तः ते च-

- परात् तु तच्छ्रुतेः
- कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैयर्थ्यादिभ्यः

**परात् तु तच्छ्रुतेः** इति-

तज्जीवस्य कर्त्तृत्वं पराद्धेतोऽति। "अन्तः प्रविष्टः शास्ता जनानामि"[101] त्यादिश्रुतेः।

**कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैयर्थ्यादिभ्यः** इति-

वैषम्यादिदोषनिरासार्थस्तु शब्दः। जीवकृतकर्मापेक्षः परोऽन्यस्मिन्नपि जन्मनि धर्मादिकं कारयति विहितप्रतिषिद्धाऽवैयर्थ्यादिभ्यः।

**द्वितीयोऽध्यायस्य तृतीयपादे अंशाधिकरणम्-**

अस्मिनधिकरणे एकादशसूत्राणि सन्ति तानि च-

- अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके
- मन्त्रवर्णात्
- अपि च स्मर्यते

---

[101] - तैत्ति आ० ३.११ ॥

- प्रकाशादिवत् तु नैवं पर:
- स्मरन्ति च
- अनुज्ञापरिहारौ देहसम्बन्धाज्योतिरादिवत्
- असन्ततेश्चाव्यतिकर:
- आभास एव च
- अदृष्टानियमात्
- अभिसंध्यादिष्वपि चैवम्
- प्रदेशादिति चेन्नान्तर्भावात्

**अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके** इति-

अंशांशिभावाज्जीवपरमात्मनोर्भेदाभेदौ दर्शयति, परमात्मनो जीवोंऽश: "ज्ञाज्ञौ द्वावजावीशानीशावि" त्यादिभेदव्यपदेशात् "तत्त्वमसी"[102] त्याद्यभेदव्यपदेशाच्च। अपि च आथर्वणिका: "ब्रह्मदाशा ब्रह्मदासा ब्रह्मकितवा" इति ब्रह्मणो हि कितवादित्वमधीयते।

**मन्त्रवर्णात्** इति-

"पादोऽस्य विश्वाभूतानी" ति मन्त्रवर्णाज्जीवो ब्रह्मांश:।

**अपि च स्मर्यते** इति-

"ममैवांशो जीवलोके जीवभूत: सनातन:"[103] इति जीवस्य ब्रह्मांशत्वं स्मर्यते।

**प्रकाशादिवत्तु नैवं पर:** इति-

---

[102] - छान्दो० ६.८.७ ॥

[103] - गीता १५.७ ॥

जीवस्य परमपुरुषांशत्वे अंशी सुखदुःखं नानुभवति। यथा प्रकाशादिः स्वांशगतगुणदोषवर्जितो भवति।

**स्मरन्ति च** इति-

“तत्र यः परमात्माऽसौ स नित्यो निर्गुणः स्मृतः। न लिप्यते फलैश्चापि पद्मपत्रमिवाम्भसा। कर्मात्मा त्वपरो योऽसौ मोक्षबन्धैः स युज्यते”[104] इत्यादिना स्मरन्ति च।

**अनुज्ञापरिहारौ देहसम्बन्धाज्ज्योतिरादिवत्** इति-

“स्वर्गकामो यजेत” “शूद्रो यज्ञे नावक्लृप्तः” इत्याद्य् अनुज्ञापरिहारावुपपद्येते जीवानां ब्रह्मांशत्वेन समत्वेऽपि विषमशरीरसम्बन्धात्। यथा श्रोत्रियागारादग्निराह्रियते, श्मशानादेस्तु नैव। यथा वा शुचिपुरुषपात्रादिसंस्पृष्टं जलादिकं गृह्यते, नैतरं तद्वत्।

**असन्ततेश्चाव्यतिकारः** इति-

विभोरंशत्वेऽपि गुणेन विभुत्वेऽपि चात्मनां स्वरूपतोऽणुत्वेन सर्वगतत्वाभावात् कर्मादिव्यतिकरो नास्ति।

**आभासा एव च** इति-

परेषां कपिलादीनां व्यतिकरप्रसङ्गात् सर्वगतात्मवादाश्चाभासा एव।

**अदृष्टानियमात्** इति-

सर्वगतात्मवादेऽदृष्टमाश्रित्यापि व्यतिकरो दुर्वारोऽदृष्टाऽनियमात्

---

[104] - विष्णुपुराणे ॥

**अभिसंध्यादिष्वपि चैवम्** इति-

अहमिदं करिष्ये, इदं नेति सङ्कल्पादिष्वप्येवमनियमः

**प्रदेशादिति चेन्नान्तर्भावात्** इति-

स्वशरीरस्थात्मप्रदेशात् सर्वं समञ्जसमिति चेन्न, तत्र सर्वेषामात्मप्रदेशानामन्तर्भावात् इति जीवात्मनो ब्रह्मणोंऽशत्वनिरूपणाधिकरणम्। तदेवं तृतीयपादे वेदान्तवाक्येषु श्रृष्टिविषये विप्रतिषेधदोषगन्धोऽपि नास्तीति कौस्तुभप्रभायां श्रीकाश्मीरिकेशवभाट्टैः सम्यक् उपपादितम्।

द्वितीयोऽध्यायस्य तृतीयपादः समाप्तः।

## ❖ चतुर्थपादस्य वेदान्तकौस्तुभप्रभाया: समीक्षणम् चतुर्थखण्ड:-

तृतीये पादे वेदान्तेषु श्रृष्टिवाक्यानां श्रृष्टिप्रक्रिया विषये विरोध: परिहृत:। सम्प्रति इन्द्रियाणां श्रृष्टिविषये वेदान्तवाक्यानां विप्रतिपत्ते: निराकरणम्। चतुर्थपादे क्रियते। अस्मिन् पादे अष्टाधिकरणानि सन्ति तानि च-

- **प्राणोत्पत्त्यधिकरणम्**
- **सप्तगत्यधिकरणम्**
- **प्राणाणुत्वाधिकरणम्**
- **मुख्यप्राणोत्पत्त्यधिकरणम्**
- **वायुक्रियाधिकरणम्**
- **श्रेष्ठाणुत्वाधिकरणम्**
- **ज्योतिराद्यधिकरणम्**
- **संज्ञामूर्तिक्लृप्त्यधिकरणम्**

### द्वितीयाध्यास्य चतुर्थपादे प्राणोत्पत्त्यधिकरणम्-

अस्मिनाधिकरणे चत्वारिसूत्राणि सन्ति तानि च-

- तथा प्राणा:
- गौण्यसम्भवात्
- तत्प्राक्श्रुतेश्च
- तत्पूर्वकत्वाद्वाच:

**तथा प्राणा:** इति-

करणोत्पत्तिश्चिन्त्यते खादिवादिन्द्रियाणि जायन्ते।

**गौण्यसम्भवात्** इति-

"न च एतस्मादात्मन आकाश: सम्भूत:" इत्यादि सृष्टिप्रकरणे करणोत्पत्त्यऽश्रवणात् करणोत्पत्तिश्रुतिगौणीति वाच्यम्, उत्पत्तिश्रुतेर्भूयस्त्वादेकविज्ञानेन सर्वविज्ञानप्रतिज्ञाविरोधाच्च गौण्यसम्भवात्।

**तत्प्राक् श्रुतेश्च** इति-

तस्मिन् वाक्ये खादिषु मुख्यस्य क्रियापस्येनिद्रयेष्वपि श्रुतेरिन्द्रियोद्भवो मुख्य:।

**तत्पूर्वकत्वाद्वाच:** इति-

प्राणा खादिवदुत्पद्यन्ते वाक्प्राणमनसाम् "अन्नमयं हि सौम्य! मन: आपोमय प्राणस्तेजोमयी वाक्" इत्यनेन तेजोऽन्नपूर्वकत्वाभिधानात् इति प्राणोत्पत्त्याधिकरणम्।

## द्वितीयोऽध्यास्य चतुर्थपादे सप्तगत्यधिकरणम्-

अस्मिनधिकरणे द्वे सूत्रे स्त: ते च-

- सप्त गतेर्विशेषितत्वाच्च
- हस्तादयस्तु स्थितेऽतो नैवम्

**सप्त गतेर्विशेषितत्वाच्च** इति-

तानि सप्तिकादशवेति संशये "प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति" इतिगतेस्तत्र समानामेव "न पश्यति न जिघ्रति न रसयते न वदति न शृणोति न मनु ते न स्पृशते" इति विशेषतत्वाच्च सप्तैवेन्द्रियाणीति पूर्वपक्ष:।

**हस्तादयस्तु स्थितेऽतो नैवं हि** इति-

सप्तभ्योऽतिरिक्ते "हस्तो वै ग्रह" इत्यादिना निश्चिते सप्तैवेन्द्रियाणीति नैवं मन्तव्यम्। "दशमे पुरुषे प्राणा आत्मैकादशे" ति श्रुतेः। एकादशेन्द्रियाणीति सिद्धान्तः इति निरूपितम्।

**द्वितीयोऽध्यास्य चतुर्थपादे प्राणाणुत्वाधिकरणम्-**

अस्मिनधिकरणे एकमेव सूत्रमस्ति।

**अणवश्च** इति-

"सर्वे प्राणा उत्क्रामन्ति" इत्युत्क्रान्तिश्रुतेः प्राणा अणवः इति निरूपितम्।

**द्वितीयोऽध्यास्य चतुर्थपादे मुख्यप्राणोत्पत्त्यधिकरणम्-**

अस्मिनधिकरणे एकमेव सूत्रमस्ति-

**श्रेष्ठश्च** इति-

"श्रेष्ठो मुख्यः प्राणो वाव ज्येष्ठः श्रेष्ठश्च" इति श्रुतिप्रोक्तः प्राणो महाभूतादिवदुत्पद्यते। कुतः? "एतस्माज्जायते प्राणः" इति समानश्रुतेः।

**द्वितीयोऽध्यास्य चतुर्थपादे वायुक्रियाधिकरणम्-**

अस्मिनधिकरणे चत्वारि सूत्राणि सन्ति-

- न वायुक्रिये पृथगुपदेशात्
- चक्षुरादिवत् तु तत्सहशिष्ट्यादिभ्यः
- अकरणत्वाच्च न दोषस्तथा हि दर्शयति
- पञ्चवृत्तिर्मनोवद्व्यपदिश्यते

**न वायुक्रिये पृथगुपदेशात्** इति-

वायुमात्रं करणं क्रिया वा प्राणो न भवति किन्तु वायुरेवावस्थान्तरमापन्न: प्राण इत्युच्यते। "एतस्माज्जायते प्राणो मन: सर्वेन्द्रियाणि च खं वायु" रिति पृथगुपदेशात्।

**चक्षुरादिवत् तु तत्सहशिष्ट्यादिभ्य:** इति-

श्रेष्ठोऽपि प्राणश्चक्षुरादिवज्जीवोपकरणविशेष:। कुत:? प्राणसंवादादिषु चक्षुरादिभि: सह प्राणस्य शिष्ट्यादिभ्य: शासनादिभ्य:।

**अकरणत्वाच्च न दोषस्तथा हि** इति-

ननु प्राणस्य जीवोपकरणत्वे तदनुरूपकार्याभावेनाकरणत्वाद्दोष इति न यतो देहेन्द्रियविधारणं प्राणासाधारणं कार्यम्। "अहमेवैतत् पञ्चधात्मानं विभज्यैतद्वाणमवष्टभ्य विधारयामी" ति श्रुतिर्दर्शयति।

**पञ्चवृत्तिर्मनोवद्व्यपदिश्यते** इति-

यथा बहुवृत्तिर्मन: स्ववृत्तिभि: कामादिभि: जीवस्योपकरोति, तथा अपानादिवृत्तिभि: पञ्चवृत्ति: प्राणोऽपि जीवोपकारकत्वेन व्यपदिश्यते इति प्रतिपादितम्।

**द्वितीयोऽध्यास्य चतुर्थपादे श्रेष्ठाणुत्वाधिकरणम्-**

अस्मिन अधिकरे एकमेव सूत्रमस्ति।

**अणुश्च** इति-

उत्क्रान्तिश्रुते: प्राणोऽणुश्च इति निरूपणम्।

**द्वितीयोऽध्यास्य चतुर्थपादे ज्योतिराद्यधिकरणम्-**

अस्मिनधिकरणे पञ्चसूत्राणि सन्ति-

- ज्योतिराद्यधिष्ठानं तु तदामननात्
- प्राणवता शब्दात्
- तस्य नित्यत्वात्
- त इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात्
- भेदश्रुतेर्वैलक्षण्याच्च

**ज्योतिराद्यधिष्ठानं तु तदामननात्** इति-

वागादिकरणजातमग्न्यादिदेवताप्रेरितं कार्ये प्रवर्त्तते “अग्निर्वाग्भूत्वा मुखं प्रविशादि” त्यादिश्रुते:।

**प्राणवता शब्दात्** इति-

जीवेनैवेन्द्रियाणां स्वस्वामिभाव: सम्बन्ध: स भोक्ता “अथ यत्रैतदाकाशमनुविषणं चक्षुष: पुरुषो दर्शनाय चक्षुरि” त्यादिशब्दात्।

**तस्य नित्यत्वात्** इति-

उक्तलक्षणस्य सम्बन्धस्य जीवेनैव नित्यत्वान्नत्वधिष्ठातृदेवताभि:।

**त इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात्** इति-

श्रेष्ठ प्राणभिन्नत्वेन तेषां प्राणानाम् “एतस्माज्जायते प्राणो मन: सर्वेन्द्रियाणि च” इति व्यपदेशात्, ते प्राणा इन्द्रियसंज्ञकानि तत्त्वान्तराणि, न तु श्रेष्ठवृत्तिविशेषा:।

**भेदश्रुतेर्वैलक्षण्याच्च** इति-

वागादिप्रकरणमुपसंहृत्य "अथ हेममासन्यं प्राणमूचुरि" ति तेभ्यो वागादिभ्य: श्रेष्ठस्य प्राणस्य भेदश्रवणात् देहेन्द्रियादिस्थितिहेतो: श्रेष्ठात् प्राणादीन्द्रियाणां विषयग्राहकत्वेन वैलक्षण्याच्च तानि तत्त्वान्तराणि।

**द्वितीयोऽध्यास्य चतुर्थपादे संज्ञामूर्तिक्लृप्त्यधिकरणम्-**

अस्मिन अधिकरणे त्रीणि सूत्राणि सन्ति तानि च-

- संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत् कुर्वत उपदेशात्
- मांसादि भौमं यथाशब्दमितरयोश्च
- वैशेष्यात् तु तद्वादस्तद्वाद:

**संज्ञामूर्तिकक्लृप्तिस्तु त्रिवृत् कुर्वत उपदेशात्** इति-

"सेयं देवतैक्षत हन्ताहमिमास्तिस्त्रो देवता अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणी" ति "तासां त्रिवृतं त्रिवृतमेकैकां करवाणी" ति नामरूपव्याकरणमपि त्रिवृत्कुर्वत: परस्यैव कर्म। य एकैकां देवतां त्रिरूपामकरोत् स एव हि अग्न्यादित्यादीनां नामरूपकर्त्ता। कुत:? "सेयं देवते"-त्युपक्रम्य "अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणी" ति व्याकरणस्य परदेवताकर्त्तृकत्वोपदेशात्।

**मांसादि भौमं यथाशब्दमितरयोश्च** इति-

तेषां त्रिवृत्कृतानां तेजोऽवन्नानां कार्याणि शरीरे शब्दादेवावगन्तव्यानि "भूमे: पुरीषं मांसं मनश्चेति अपां मूत्रं लोहितं प्राणश्चेति तजसोऽस्थिमज्जावाक् चेति"।

**वैशेष्यात् तु तद्वादस्तद्वाद:** इति-

तेषां भेदेन ग्रहणं तु भागभूयस्त्वात् इति ब्रह्मणो व्यष्टिस्त्रष्ट्त्वनिरूपणाधिकरणम्।

तदेवं द्वितायाध्याये चतुर्भिः पादैः क्रमशः सांख्यादि स्मृतीनां विरोधः परब्रह्ममणिसमन्वये प्रथमपादे निराकृतः। तदनु द्वितीयपादे सांख्यादि मतानां युक्तिविरुद्धत्वं श्रुतिविरुद्धत्वं च प्रतिपादिते। तृतीयपादे वेदान्त वाक्येषु जगत्श्रृष्टि विषये विप्रतिपत्ति दोषगन्धोनास्तीति प्रतिपादितम्। चतुर्थपादे च इन्द्रियाणां श्रृष्टिविषये वेदान्त वाक्यसमन्वयसिद्धम् मतान्तरविरोधनिराकरणपूर्वकम् युक्तियुक्तमिति प्रतिपादितम्। उक्तश्च कौस्तुभप्रभायां-

अप्रतर्क्याय हरये रमाकान्ताय विष्णवे।

श्रीकृष्णाय नमस्तेऽस्तु निर्दोषगुणशालिने॥

**इति द्वितीयोध्यायः**

# तृतीयोऽध्याय:

## वेदान्तकौस्तुभप्रभाया: तृतीयोऽध्यायस्य समीक्षात्मक:

### ❖ प्रथमपादस्य वेदान्तकौस्तुभप्रभाया: समीक्षात्मक: प्रथमखण्ड:-

प्रथमद्वितीयाध्यायाम् ब्रह्मण: जगत्कारणत्वं, जीवनां स्वरूपं, जगत: स्वरूपम्, ब्रह्मण: सह जीवस्य भेदाभेदसम्बन्ध: ब्रह्मण: द्वैताद्वैतत्व: सगुणत्वं निर्गुणत्वं च वर्णितम्। इत्येतत् सर्वं अथेदानीम् तृतीयोध्याये जीवस्य संसारगति एवं ब्रह्मोपासनया संसारबन्धेन मुक्ति इत्यादि विषय जातम् विचारयिष्यते।

इयं तावच्छ्रेयसाधनप्रक्रिया। आदौ जन्मसमये पुंसि भगवत: श्रीमुकुन्दस्य कृपाकटाक्षो मुमुक्षोत्पादेनासाधारणहेतुभूत:। तत: सात्त्विकं मुमुक्षार्हं जन्म। मुमुक्षायां सत्यां तत्साधने स्वाधिकारानुरूपं यतते।

तत्रादौ यथाधिकारभगवदर्पितनिष्कामकर्मयोग:। तेन भगवदीयानुग्रहसहकृतमनस्कस्य ममुक्षोर्वैराग्यादिपूर्वकजिज्ञासया श्रवणादिलक्षणया तत्स्वरूपादिविषयकपरोक्षज्ञानम्। ततो ध्यानपरिपाकजन्या परा भक्तिपर्यायरूपा ध्रुवा स्मृति:। तया च तदनुग्रहेण तत्साक्षात्कार:। ततो मोक्ष इति।

तत्र मोक्षोपायश्च प्राप्यवस्त्वतिरिक्तवैतृष्ण्यम्। प्राप्यवस्त्वतिरिक्तवैतृष्ण्यम्। प्राप्यतृष्णा चेति। तत्सिद्धये प्रथमद्वितीयपादयोरारम्भ:।

तत्र प्रथमे पादे पाञ्चाग्निविद्यामाश्रित्य संसारिजीवस्य लोकगत्यागतिरूपदोषा: प्रदर्श्यन्ते वैराग्यार्थम्। तस्माज्जुगुप्सेते ते श्रुते:।

तत्रायं जीवो देहाद्देहान्तरं गच्छन् देहबीजभूतैर्भूतसूक्ष्मैः संपरिष्वक्तो गच्छति, उतासंपरिष्वक्त इति संशयेऽसंपरिष्वक्त इति पूर्वः पक्षः। स्वर्गे नरके वा यत्र फलमनुभूयते, तत्रैव भूतानि लभ्यन्त इति सांख्यसिद्धान्तादिति प्राप्ते स्वसिद्धान्तमाह-

अस्मिनपादे षट् अधिकरणानि सन्ति तानि च-

- **तदन्तरप्रतिपत्त्यधिकरणम्**
- **कृतात्ययाधिकरणम्**
- **अनिष्टादिकार्य्यधिकरणम्**
- **तत्स्वाभाव्यापत्त्यधिकरणम्**
- **नातिचिराधिकरणम्**
- **अन्याधिष्ठिताधिकरणम्**

**तृतीयोऽध्यायस्य प्रथमपादे तदन्तरप्रतिपत्त्यधिकरणम्-**

अस्मिनधिकरणे सप्तसूत्राणि सन्ति-

- तदन्तरप्रतिपत्तौ रंहति संपरिष्वक्तः प्रश्ननिरूपणाभ्याम्
- त्र्यात्मकत्वात् तु भूयस्त्वात्
- प्राणगतेश्च
- अग्न्यादिगतिश्रुतेरिति चेन्न भाक्तत्वात्
- प्रथमेऽश्रवणादिति चेन्न ता एव ह्युपपत्तेः
- अश्रुतत्वादिति चेन्नेष्टादिकारिणां प्रतीतेः
- भाक्तं वानाऽऽत्मवित्त्वात् तथा हि दर्शयति

**तदन्तरप्रतिपत्तौ रंहति संपरिष्वक्तः प्रश्ननिरूपणाभ्याम् इति-**

समन्वयाविरोधाभ्यां साध्ये निश्चिते अथ साधनानि निरूप्यन्ते। सूत्रादौ वैराग्यार्थं स्वर्गादिगमनागमनादिदोषान् दर्शयति। उक्तलक्षण: प्राणादिमान् जीवो हि सूक्ष्मभूतसम्परिष्वक्त एव देहं विहाय देहान्तरं गच्छतीति "वेत्थ यथा पञ्चम्यामाहुतावाप: पुरुषवचसो भवन्ती त्यादि प्रश्ननिरूपणाभ्यां गम्यते।

**त्र्यात्मकत्वात् तु भूयस्त्वात्** इति-

त्रिवृत्करणश्रुत्याऽपां त्र्यात्मकत्वादितरयोरपि ग्रहणं, केवलाप्-ग्रहणं तु तद्भूयस्त्वादुपपद्यते।

**प्राणगतेश्च** इति-

"तमुत्क्रामन्तं सर्वे प्राणा अनुत्क्रामन्ति"[105] इति प्राणगतिश्रवणाच्च भूतसूक्ष्मपरिवृत एव गच्छति।

**अग्न्यादिगतिश्रुतेरिति चेन्न भाक्तत्वात्** इति-

"यत्रास्य पुरुषस्य मृतस्याग्निं वागप्येति वातं प्राणश्चक्षुरादित्यम्"[106] इत्यादिना वागादीनामग्न्यादिषु गतेर्लयस्य श्रवणान्न तेषां जीवने सह गमनमिति चेन्न अग्न्यादिगतिश्रुते: "ओषधिर्लोमानि वनस्पतीन् केशा" इति सहपाठेन भाक्तत्वात्।

**प्रथमेऽश्रवणादिति चेन्न ता एव ह्युपपत्ते:** इति-

प्रथमे अग्नावपामश्रवणात् कथं पञ्चम्यामाहुतौ तासां पुरुषभाव इति चेन्न, यत: श्रद्धाशब्देन ता एवोच्यन्ते, उपक्रमाद्यनुपपत्ते:।

**अश्रुतत्वादिति चेन्नेष्टादिकारिणां प्रतीते:** इति-

---

[105] - बृहदा० ४.४ ॥

[106] - बृहदा० २.१२.३ ॥

भूतसम्परिष्वक्तो जीवो रंहतीति न वक्तुं शक्यमवादिवज्जीवस्याश्रवणादिति चेन्न, "इष्टापूर्ते दत्तमित्युपासते ते धूममभिसम्भवन्ती"[107] त्यादिर्नेष्टादिकारिणां धूममार्गेण चन्द्रलोकप्राप्तिर्निरूप्यते एव सोमशब्देन श्रुत्यानिरूप्यन्ते "एष सोमो राजा सम्भवती" ति अत्रापि सोमो राजा सम्भवतीत्यनेन प्रतीते:।

**भाक्तं वानाऽत्मवित्त्वात् तथा हि दर्शयति** इति-

केवलकर्मिणामनात्मवित्त्वाद्देवान् प्रति गुणभावे सति "तद्देवानामन्नं तं देवा भक्षयन्ति" इति इष्टादिकारिणामन्नत्वेन भक्षत्वं भाक्तम्। "पशुरेव स देवानाम्" इति सकामजीवस्य देहान्ते सूक्षम्देहावलम्बनपूर्वकचन्द्रलोकप्राप्तिनिरूपणम्।

## तृतीयोऽध्यायस्य प्रथमेपादे कृतात्ययाधिकरणम्-

अस्मिनधिकरणे चत्वारिसूत्राणि सन्ति-

- कृतात्ययेऽनुशयवान् दृष्टस्मृतिभ्यां यथेतमनेवं च
- चरणादिति चेन्नोपलक्षणार्थेति कार्ष्णाजिनि:
- आनर्थक्यमिति चेन्न तदपेक्षत्वात्
- सुकृतदुष्कृते एव तु बादरि:

**कृतात्ययेऽनुशयवान् दृष्टस्मृतिभ्यां यथेतमनेवं च** इति-

आमुष्मिकफलप्रदकर्मक्षये सति ऐहिकफलप्रदकर्मवात् यथा गतमनेवं च प्रत्यवरोहति, "तद्य इह रमणीयचरणा अभ्यासो ह यत्ते रमणीयां योनिमापद्येरन्नि"[108]

---

[107] - कठो० ---

[108] - छा० ५.१०.७२ ॥

त्यादिश्रुतेः। "वर्णाः आश्रमाश्च स्वकर्मनिष्ठाः प्रेत्य कर्मफलमनुभूय ततः शेषेण विशिष्टजातिकुलरूपायुः श्रुतवृत्तवित्तसुखमेधयो जन्म प्रतिपद्यन्ते" इति स्मृतेश्च।

**चरणादिति चेन्नोपलक्षणार्थेति कार्ष्णाजिनिः** इति-

ननु "रमणीयचरणा" इत्यत्र चरणमाचारस्तस्मादेवेष्टसिद्धौ न सानुशस्यावरोहः सम्भवतीति चेन्न, यतश्चरणश्रुतिः कर्मोपलक्षणार्था, इति कार्ष्णाजिनिर्मन्यते।

**आनर्थक्यमिति चेन्न तदपेक्षत्वात्** इति-

ननु तथात्वे चरणस्यानर्थक्यं स्यादिति चेन्न कर्मणां चरणापेक्षत्वात्।

**सुकृतदुष्कृते एव तु बादरिः** इति-

सुकृत-दुष्कृत कर्मणी चरणशब्देनोच्येते इति वादरिः।

**तृतीयोऽध्यायस्य प्रथमेपादे अनिष्टादिकार्य्यधिकरणम्-**

अस्मिनधिकरणे दश सूत्राणि सन्ति-

- अनिष्टादिकारिणामपि च श्रुतम्
- संयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनात्
- स्मरन्ति च
- अपि च सप्त
- तत्रापि च तद्व्यापारादविरोधः
- विद्याकर्मणोरिति तु प्रकृतत्वात्
- न तृतीये तथोपलब्धेः
- स्मर्यतेऽपि च लोके
- दर्शनाच्च

- तृतीयशब्दावरोधः संशोकजस्य

**अनिष्टादिकारिणामपि च श्रुतम्** इति-

अनिष्टादिकारिगतिश्चिन्त्यते। तत्र तावत् पूर्वः पक्षः निषिद्धसक्तानां विहितविरक्तानां दुष्टानामपि "ये वै के चास्माल्लोकात् प्रयन्ति चन्द्रमसं, ते सर्वे गच्छन्ती"[109] ति गमनं श्रुतम्।

**संयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनात्** इति-

यमालये दुःखमनुभूयानिष्टादिकारिणां चन्द्रमण्डलारोहावरोहौ, "पुनः पुनर्वशमापद्यतेमे, वैवस्वतं संयमनं जनानामि"[110] त्यादिषु यमालयगमनदर्शनात्।

**स्मरन्ति च** इति-

पराशरादयः यमवश्यत्वं स्मरन्ति।

**अपि सप्त** इति-

रौरवादीन् सप्तनरकानपि स्मरन्ति।

**तत्रापि च तद्व्यापारादविरोधः** इति-

रौरवादिष्वपि चित्रगुप्तादीनामधिष्ठातृणां यमायत्ततया यमस्यैव व्यापारात्तत्राऽन्येऽप्यधिष्ठातार इति नास्ति विरोधः।

**विद्याकर्मणोरिति तु प्रकृतत्वात्** इति-

---

[109] - कौषीतकि १.२ ॥

[110] - कठोपनिषद् ॥

अथ राद्धान्तः। पञ्चाग्निविद्यायाम् "अथैतयोः पथोर्न कतरेण च तानीमानि क्षुद्राणि असकृदावर्तीनि भूतानि भवन्ति जायस्व म्रियस्वेत्येतत्तृतीयं स्थानं तेनाऽसौ लोको न सम्पुर्यते"[111] इत्यनिष्टादिकारिणमनवरोहं दर्शयति। पथोरिति च विद्याकर्मणोर्निर्देशस्तयोः प्रकृतत्वात्। "तद्य इत्थं विदुरि"[112] ति देवयानः पन्था "इष्टापूर्त्ते दत्तमि" ति पितृयानस्तयोरन्यतरेणापि ये न गच्छन्ति तानीमानि तृतीयस्थानभाञ्जिभूतानीति पापिनां चन्द्रगतिर्नास्तीति वाक्यार्थः।

**न तृतीये तथोपलब्धेः** इति-

तृतीये स्थानेऽनिष्टादिकारिदेहारम्भार्थमपि पञ्चमाहुत्यपेक्षा नास्ति श्रद्धादिक्रमप्राप्तां पञ्चमाहुतिं विनाऽपि "जायस्वे" ति देहारम्भोपलब्धेः।

**स्मर्यतेऽपि च लोके** इति-

"यज्ञे द्रोणविनाशाय पावकादिति नः श्रुतमि" त्यादिना इष्टादिकारिणामपि धृष्टद्युम्नप्रभृतीनां पञ्चमाहुतिं विनैव देहोत्पत्तिः स्मर्यते।

**दर्शनाच्च** इति-

चतुर्विधेषु भूतेषु स्वेदजोद्भिजयोः स्त्रीपुरुषसङ्गमन्तरेणोत्पत्ति दर्शनाच्च न पञ्चमाहुत्यपेक्षा।

**तृतीयशब्दावरोधः संशोकजस्य** इति-

"अण्डजं जीवजमुद्भिज्जम" इत्यत्र तु तृतीयशब्देन स्वेदजस्य संग्रहः अतो न चातुर्विध्यहानिः इति अनिष्टकारिणां चन्द्रलोकप्राप्ति निरूपणाधिकरणम्।

---

[111] - छान्दो० ६.३.१ ॥

[112] - छान्दो० ५.१०.३ ॥

### तृतीयोऽध्यायस्य प्रथमेपादे तत्स्वाभाव्यापत्त्यधिकरणम्-

अस्मिनधिकरणे एकमेव सूत्राणि सन्ति-

**तत्स्वाभाव्यापत्तिरुपपते:** इति-

अरोह्प्रकारश्चिन्त्यते। "अथैतमेवाध्वानं पुनर्निर्वर्त्तते यथेतमाकाशमाकाशाद्वायुं वायुर्भूत्वा धूमो भवति धूमो भूत्वाऽभ्रं भवत्यभ्रं भूत्वा मेघो भवति मेघो भूत्वा प्रवर्षती"[113] त्यत्र देवादिभाववदाकाशादिभाव:? सादृश्यप्राप्तिमात्रम्? इति सन्देहे आकाशादिभाव इति प्राप्ते उच्यते, तत्सादृश्यापत्तिरिति। कुत:? सादृश्यप्राप्तेरेवोपपन्नत्वात्।

### तृतीयोऽध्यायस्य प्रथमेपादे नातिचिराधिकरणम्-

अस्मिनधिकरणे एकमेव सूत्राणि सन्ति-

**नातिचिरेण विशेषात्** इति-

जीवोऽल्पेन कालेनाकाशादिवर्षान्तसाम्यं विजहाति पृथिवीं प्रविश्य व्रीह्यादिभावमापद्यते। अतो खलु दुर्निष्प्रपतरमिति विशेषवचनात्। व्रीह्यादिभावाद्दु:खतरनि:सरणवाक्यं पूर्वत्राचिरकालिकमवस्थानं द्योतयति।

### तृतीयोऽध्यायस्य प्रथमेपादे अन्याधिष्ठिताधिकरणम्-

अस्मिनधिकरणे चत्वारि सूत्राणि सन्ति-

- अन्याधिष्ठिते पूर्ववदभिलाषात्
- अशुद्धमिति चेन्न शब्दात्

---

[113] - छान्दोग्य० ५.१०.५ ॥

- रेत: सिग्योगोऽथ
- योने: शरीरम्

**अन्याधिष्ठिते पूर्ववदभिलाषात्** इति-

ते इह व्रीहियवा ओषधिवनस्पतयस्तिलमाषा इति जायन्ते तत्रान्यक्षेत्रज्ञाधिष्ठिते व्रीह्यादौ जायन्ते संसर्गमात्रं प्राप्नुवन्ति इत्यर्थो ज्ञेय:। कुत:? आकाशादिभिरिव तेषां व्रीह्यादिभिरपि संसर्गमात्रकथनात्।

**अशुद्धमिति चेन्न शब्दात्** इति-

तेषां व्रीह्यादिस्थावरयोनिप्रापकं हिंसायोगाज्ज्योतिष्टोमाद्यशुद्धं कर्मास्तीति चेज्ज्योतिष्टोमादेर शुद्धत्वं नास्ति विधिशास्त्रात्।

**रेत: सिग्योगोऽथ** इति-

"यो यो ह्यन्नमत्ति यो रेत: सिञ्चति तद्भूय एव भवति"[114] इति सिग्भाववत् व्रीह्यादिभावोऽपि।

**योने: शरीरम्** इति-

"योनिमाश्रित्य शरीरी भवति" इति जीवस्य चन्द्रलोकात् प्रत्यावर्त्तनपूर्वकं पुन: शरीरधारणाधिकरणम्। तदेवं प्रथमपादे जाग्रदवस्थायां जीवस्य जन्ममरणस्वर्गनरकगमनादि दु:खजातम् वैराग्यार्थम् प्रथमपादे यथा कौस्तुभप्रभायां निरूपितमिति विवेचितम्।

---

[114] - छान्दोग्य० ५.१०.५ ॥

## ❖ द्वितीयपादस्य वेदान्तकौस्तुभप्रभाया: समीक्षात्मक: द्वितीयखण्ड:-

तदेवं प्रथमपादे जीवस्य जाग्रदवस्थाया: संसारस्वरूपं विविच्य सम्प्रति द्वितीयपादे आत्मानात्मनो: विवेकतया वैराग्यस्य च दार्ढ्यार्थं स्वप्नायावस्था विविच्यते।

अस्मिन पादे अष्टाधिकरणानि सन्ति तानि च-

- **सन्ध्यधिकराणम्**
- **तदभावाधिकरणम्**
- **कर्मानुस्मृतिशब्दविध्यधिकरणम्**
- **मुग्धाधिकरणम्**
- **उभयलिङ्गाधिकरणम्**
- **प्रकृतैतावत्त्वाधिकरणम्**
- **पराधिकरणम्**
- **फलाधिकरणम्**

### तृतीयाध्यास्य द्वितीयपदे सन्ध्यधिकराणम्-

अस्मिन अधिकरणे षट्सूत्राणि सन्ति-

- संध्ये सृष्टिराह हि
- निर्मातारं चैके पुत्रादयश्च
- मायामात्रं तु कार्त्स्न्येनानभिव्यक्तरूपत्वात्
- सूचकश्च हि श्रुतेराचक्षते च तद्विद:
- पराभिध्यानात् तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ
- देहयोगाद्वा सोऽपि

**संध्ये सृष्टिराह हि** इति-

स्वप्नमधिकृत्य "अथ न तत्र रथा रथयोगा न पन्थानो भवन्ति, अथ रथान् रथयोगान् पथः सृजते" इत्यादि श्रूयते। तत्र रथादिसृष्टिर्जीवकृता? उत ब्रह्मकृता? इति सन्देहे, सन्ध्ये स्वप्नस्थाने रथादिसृष्टिर्जीवकृता। हि यतः "सृजते" "स हि कर्त्ते" ति श्रुतिराह।

**निर्मातारं चैके पुत्रादयश्च** इति-

"य एषु सुप्तेषु जागर्त्ति कामं पुरुषो निर्मिमाण"[115] इति स्वप्ने एके जीवं कामानां पुत्रादिरूपाणां कर्त्तारं समामनन्तीति पूर्वः पक्षः।

**मायामात्रं तु कात्स्र्न्येनानभिव्यक्तरूपत्वात्** इति-

तत्राभिधीयते, स्वप्ने सत्यसङ्कल्पसर्वज्ञपरमेश्वरनिर्मितमेव रथादिकार्यजातम्। यतो ह्याश्चर्यभूतं तत्र जीवकृतं, तदीयसत्यसङ्कल्पत्वादेर्बद्धावस्थायां कात्स्र्न्येनानभिव्यक्तस्वरूपत्वात्।

**सूचकश्च हि श्रुतेराचक्षते च तद्विदः** इति-

"यदा कर्मसु काम्येषु स्त्रियं स्वप्नेषु पश्यति, समृद्धं तत्र जानीयात्तस्मिन् स्वप्ननिदर्शने"[116] इति "अथ यदा स्वप्नेषु पुरुषं कृष्णं कृष्णदन्तं पश्यति स एनं हन्ती" ति श्रुतेः स्वप्नः साध्वागमासाध्वागमयोः सूचकोऽवगम्यते, एतदेव स्वप्नफलविद आचक्षते। अतो बुद्धिपूर्वकेष्टागमसूचकस्वप्नादर्शनादेवानिष्टागमसूचकस्वप्नदर्शनाच्च परमात्मैव स्वप्नरथादिनिर्माता।

---

115 - कठो० १.१.५ ॥

116 - छान्दो० ५.२.९ ॥

**पराभिध्यानात् तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ** इति- सत्यसङ्कल्पादिकं स्वाप्नपदार्थनिर्मातृत्वे जीवस्यावश्यमङ्गीकरणीयं, तच्च जीवकर्मानुरूपात् परमेश्वरसङ्कल्पाद्बद्धाऽवस्थायां तिरोहितं तस्मादेव जीवस्य बन्धमोक्षौ भवतः। "संसारबन्धस्थितिमोक्षहेतुरि"[117] ति श्रुतेः।

**देहयोगाद्वा सोऽपि** इति-

स च तिरोभावोऽविद्यायोगद्वारेण भवति।

**तृतीयोऽध्यायस्य द्वितीयेपादे तदभावाधिकरणम्-**

अस्मिनधिकरणे द्वे सूत्रे स्तः-

- तदभावो नाडीषु तच्छ्रुतेरात्मनि च
- अतः प्रबोधोऽस्मात्

**तदभावो नाडीषु तच्छ्रुतेरात्मनि च** इति-

स्वप्नसृष्टिनिर्माता परमात्मा। सुषुप्तिरपि नाडीपुरीतत्प्रवेशानन्तरं खलु परमात्मन्येव भवति "आसु तदा नाडीषु सुप्तो भवती" ति "ताभिः प्रत्यवसृप्य पुरीतति शेते" इति "य एषोऽन्तर्हृदये आकाशस्तस्मिञ्छेते" इति च श्रवणात्।

**अतः प्रबोधोऽस्मात्** इति-

अतएव सत आगम्ये त्यादौ श्रूयमाणं परमेश्वरदप्युत्थानमुपपद्यते इति निरूपितम्।

---

[117] -श्वेताश्व ६.१६ ॥

## तृतीयोऽध्यायस्य द्वितीयेपादे कर्मानुस्मृतिशब्दविध्यधिकरणम्-

अस्मिनधिकरणे एकमेव सूत्रमस्ति-

**स एव तु कर्मानुस्मृतिशब्दविधिभ्य: इति-**

"य सुप्त: स एव जीव उत्तिष्ठति यस्मात् पूर्वेद्यु: कर्मणोऽर्द्धं कृत्वा परेद्युरनुस्मृत्य तदर्द्धं करोति ते इह व्याघ्रो वा सिंहो वा वृको वा वराहो वा हंसो वा मशको वा यद्यद्भवन्ति तत्तथा भवन्ती" त्यादिशब्देभ्य: "अग्निहोत्रं जुहुयादात्मानमुपासीते" त्यादिविधिभ्य इति प्रतिपादनीयम्।

## तृतीयोऽध्यायस्य द्वितीयेपादे मुग्धाधिकरणम्-

अस्मिनधिकरणे एकमेवसूत्रमस्ति-

**मुग्धेऽर्द्धसम्पत्ति: परिशेषात्** इति-

मूर्च्छिते मरणार्द्धसम्पत्ति: सुषुप्त्यादिषु मूर्च्छानैकतमा, अत: परिशेषात् सा तदतिरिक्ता।

## तृतीयोऽध्यायस्य द्वितीयेपादे उभयलिङ्गाधिकरणम्-

अस्मिनधिकरणे एकादश सूत्राणि सन्ति-

- न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि
- भेदादिति चेन्न प्रत्येकमतद्वचनात्
- अपि चैवमेके
- अरूपवदेव हि तत्प्रधानत्वात्
- प्रकाशवच्चावैयर्थ्यात्

- आह च तन्मात्रम्
- दर्शयति चाथो अपि स्मर्यते
- अत एव चोपमा सूर्यकादिवत्
- अम्बुवदग्रहणात् तु न तथात्वम्
- वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवम्
- दर्शनाच्च

**न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि** इति-

अकर्मवश्यत्वात् सर्वान्तर्वर्त्तिनोऽपि परमात्मनस्तत्र तत्र दोषा न सम्भवन्तीत्युपपादितमेव स्थानतोऽपि दोषा परस्य न यत: सर्वत्र ब्रह्म निर्दोषत्वस्वाभाविकगुणात्मकत्वाभ्यां युक्तमाम्नातम्।

**भेदादिति चेन्न प्रत्येकमतद्वचनात्** इति-

वस्तुतोऽपहतपाप्मत्वादियुक्तस्यापि जीवस्य देहयोगेनावस्थाभेददोषा: सन्त्येव तथा परस्यापि भवन्त्विति चेन्न, प्रत्येकमन्तर्यामिणोदोषापादकवचनाभावात् "एष ते आत्मान्तर्याम्यमृत:" इत्यमृतत्ववचनात्।

**अपि चैवमेके** इति-

अपि च "तयोरन्य: पिप्पलं स्वादवत्त्यनश्नन्नन्योऽभिचाकशी" ति एके शाखिन अधीयते।

**अरूपवदेव हि तत्प्रधानत्वात्** इति-

नामरूपे व्याकरवाणी त्यस्मिन् कार्येऽपि परस्य नामरूपनिर्वाहकत्वेन प्रधानत्वाद्धेतोः स्वोत्पाद्यनामरूपभोक्तृत्वाभावाद्ब्रह्म अरूपवद्भवति। अतो दोषगन्धाऽनाघ्रातं ब्रह्म।

**प्रकाशवच्चावैयर्थ्यात्** इति।

तम अस्पृष्टं प्रकाशवदेवंभूतमुभयलिङ्गं ब्रह्म "आदित्य वर्णं तमसः परस्तादि" त्यनेनैकेन वाक्येनाभिधीयते वाक्यस्यावैयर्थ्यात्।

**आह च तन्मात्रम्** इति-

वाक्यं यावान् यस्यार्थस्तावन्मात्रमाह यदा, तदा तदेवावैयर्थ्यं बोध्यम्।

**दर्शति चाथो स्मर्यते** इति-

"य आत्मा अपहतपाप्मा"[118] "निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनं"[119] सत्यकामः सत्यसङ्कल्पः" इत्यादिवाक्यगणः उभयलिङ्गं ब्रह्मदर्शयति। अथ स्मर्यतेऽपि "यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः। अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः"[120]। "अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्त्तते"[121]। "अथवा बहुनैतेन किं ज्ञातेन तवार्ज्जुन विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगदि" त्यादिना।

**अतएव चोपमा सूर्यकादिवत्** इति-

---

[118] - छान्दो० ८.७.१३ ॥

[119] - श्वेता० ६.१९ ॥

[120] - गीता १५.१८ ॥

[121] - गीता १०.८ ॥

यतः सर्वगमपि ब्रह्मोभयलिङ्गत्वान्निर्दोषमेव। अतएव "यया अथात्मैको ह्यनेकस्थ जलाधारेष्विवांशुमानि" त्यादौ शास्त्रं ब्रह्मणो निर्दोषत्वं ख्यापयितुं सूर्यकादिवदुपमोच्यते।

**अम्बुवद्ग्रहणात्तु न तथात्वम्** इति-

शङ्कते, सूर्यादम्बू दूरस्थं गृह्यते, तद्वदंशिनः सकाशात् स्थानस्य ग्रहणाद्दृष्टान्तवैषम्यमिति।

**वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवम्** इति-

तत्राह स्थानिनः स्थानान्तर्भावात्तत् प्रयुक्तवृद्धिह्रासभाक्तत्वं दृष्टान्तेन निराक्रियते, उभयसामञ्जस्यादेवं विवक्षितांशमात्रं गृह्यते।

**दर्शनाच्च** इति-

सिंह इव माणवक इति लिके दर्शनाच्चौवम्।

**तृतीयोऽध्यायस्य द्वितीयेपादे प्रकृतैतावत्त्वाधिकरणम्-**

अस्मिनधिकरणे नव सूत्राणि सन्ति तानि च-

- प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः
- तदव्यक्तमाह हि
- अपि संराधने प्रत्यक्षानुमानाभ्याम्
- प्रकाशादिवच्चावैशेष्यम् प्रकाशश्च, कर्मण्यभ्यासात्
- अतोऽनन्तेन तथा हि लिङ्गम्
- उभयव्यपदेशात् त्वहिकुण्डलवत्
- प्रकाशाश्रयवद्वा तेजस्त्वात्

- पूर्ववद्वा
- प्रतिषेधाच्च

**प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः** इति-

किं "नेति नेति" ति वाक्यं "द्वे वाव ब्रह्मणो रूपे मूर्तं चामूर्त्तं चे" त्यादिना प्रकृतं मूर्त्तामूर्त्तादिरूपं प्रतिषेधत्यथवा परकृतरूपयोगात् प्राप्तं ब्रह्मण एतावत्त्वमिति सन्देहे रूपं प्रतिषेधतीति प्राप्ते उच्यते प्रकृतैतावत्त्वमेव प्रतिषेधति ततो भूयो "न ह्येतस्मादिति नेत्यन्यत्परमस्ती" त्यादिवाक्यशेषो ब्रवीति।

**तदव्यक्तमाह हि** इति-

"न चक्षुषा गृह्यते नापि वाचे"[122] त्यादि शास्त्रं ब्रह्माव्यक्तमाह।

**अपि संराधने प्रत्यक्षानुमानाभ्याम्** इति-

भक्तियोगे ध्याने तु व्यज्यते "ब्रह्मज्ञानप्रसादेन विशुद्धसत्त्वस्ततस्तु तं पश्यति निष्कलं ध्यायमानः" "भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुञ्च परन्तपः" इत्यादि श्रुतिस्मृतिभ्याम्।

**प्रकाशादिवच्चावैशेष्यम् प्रकाशश्च, कर्मण्यभ्यासात्** इति-

सूर्याग्न्यादीनां यथा तदर्थिकृतसाधनाभ्यासादाविर्भावस्तद्वद्ब्रह्मणोऽप्यवैशेष्यं, ब्रह्मप्रकाशो भवति, संराधनलक्षणादुपायाद्ब्रह्मदर्शनं भवतीत्यर्थः।

**अतोऽनन्तेन तथा हि लिङ्गम्** इति-

---

[122] - मुण्डक० ३.१२॥

ब्रह्मसाक्षात्काराद्धेतोस्तेन सह साम्यं याति "यदा पश्य: पश्यते रुक्मवर्णं कर्त्तारमीशं पुरुषं ब्रह्मयोनिं, तदा विद्वान् पुण्यपापे विधूय निरञ्जन: परमं साम्यमुपैति"[123] इति ज्ञापकात्।

**उभयव्यपदेशात् त्वहिकुण्डलवत्** इति-

मूर्त्तामिर्त्तस्याप्रतिषेध्यत्वं दृढयति, मूर्तामूर्त्तादिकं विश्वं ब्रह्मणि स्वकारणेभिन्नाभिन्नसम्बन्धेन स्थातुमर्हति भेदाभेदव्यपदेशादहिकुण्डलवत्।

**प्रकाशाश्रयवद्वा तेजस्त्वात्** इति-

जीवपुरुषोत्तमयोरपि तथा सम्बन्धो ज्ञेय:। उभयव्यपदेशात् प्रभातद्वतोरिव। अतोऽनन्तेनेत्यनेन केवलभेदो न शङ्क्य इति भाव:।

**पूर्ववद्वा** इति-

कृत्स्नप्रसक्त्यादिदोषाभावश्च पूर्ववत् बोध्य:।

**प्रतिषेधाच्च** इति-

न लिप्यते लोकदु:खेन इत्यादि प्रतिषेधाच्च न प्रकृतस्य ब्रह्मणो दोषयोग: इति परस्योभयलिङ्गताप्रतिपादेन, जीवस्य च ब्रह्मणो भिन्नाभिन्नत्वनिरूपेण स्वप्नादिस्थानस्थितिनिमित्तकपरस्य् दोषस्पर्शाभाव निरूपणम्।

## तृतीयोऽध्यायस्य द्वितीयेपादे पराधिकरणम्-

अस्मिनधिकरणे सप्तसूत्राणि सन्ति-

- परमत: सेतून्मानसम्बन्धभेदव्यप्देशेभ्य:

---

[123] - मुण्ड० ३.१३ ॥

- सामान्यात् तु
- बुद्ध्यर्थः पादवत्
- स्थानविशेषात् प्रकाशादिवत्
- उपपत्तेश्च
- यथान्यप्रतिषेधात्
- अनेन सर्वगतत्वमायामशब्दादिभ्यः

**परमतः सेतून्मानसम्बन्धभेदव्यपदेशेभ्यः** इति-

पूर्वपक्षयति। अतः प्रकृताद्ब्रह्मणः परमपि किञ्चित्तत्वमस्ति "अथ य आत्मा सेतुरिति" सम्बन्धव्यपदेशात्। "तेनेदं पूर्णं पुरुषेण सर्वं ततो यदुत्तरतरं तदरूपमनायामयं" इति भेदव्यपदेशाच्च।

**सामान्यात्तु** इति-

सिद्धान्तमाह। तु शब्दः पक्षनिषेधार्थः। जगत्कारणात् सर्वेश्वरात् परं न किञ्चिदस्ति, सेतुव्यपदेशस्तद्विधारणसारूप्यात्।

**बुद्ध्यर्थः पादवत्** इति-

उन्मानव्यपदेश उपासनार्थः "मनो ब्रह्मेत्युपासीतेत्यध्यात्मं तदेतच्चतुष्पादब्रह्म वाक् पाद" इत्यादिपादव्यपदेशात्।

**स्थानविशेषात् प्रकाशादिवत्** इति-

अपरिमितस्य परिमितत्त्वेन चिन्तनं स्थानविशेषात् प्रकाशादिवदुपपद्यते।

**उपपत्तेश्च** इति-

स्वस्य स्वप्रापकतया सम्बन्धव्यपदेशोपपत्तेश्च तत्त्वान्तराभावः।

**तथान्यप्रतिषेधात्** इति-

तथा "ततो यदुत्तरतरम्" इति भेदव्यपदेशाद्ब्रह्मेतरं तत्त्वमस्तीत्यपि न वाच्यं "यस्मात्परं नापरमस्ति किञ्चिदि" ति प्रतिषेधात्।

**अनेन सर्वगतत्वमायामशब्दादिभ्यः** इति-

अनेन परब्रह्मणः सर्वगतत्वं दृढीकृतम्। "तेनेदं पूर्णं पुरुषेण सर्वं" "ब्रह्मैवेदं सर्वमि" त्यादिशब्देभ्यः।

## तृतीयोऽध्यायस्य द्वितीयेपादे फलाधिकरणम्-

अस्मिनधिकरणे चत्वारि सूत्राणि सन्तु-

- फलमत उपपत्तेः
- श्रुतत्वाच्च
- धर्मं जैमिनिरत एव
- पूर्वं तु बादरायणो हेतुव्यपदेशात्

**फलमत उपपत्तेः** इति-

अतो ब्रह्मण एव तदधिकारिणां तदनुरूपं फलं भवत्यस्यैव तद्दातृत्वोपपत्तेः

**श्रुतत्वाच्च** इति-

स वा एष महानज आत्माऽन्नादोवसुदान "एष ह्येवानन्दयती" तित्फलदत्वस्य श्रुतत्वाच्च।

**धर्मं जैमिनिरत एव** इति-

धर्मं फलहेतुं जमिनिर्मन्यते, कृष्यादिवत्तस्यैव तद्धेतुत्वोपपत्तेः। यजेत स्वर्गकामः" इति तद्धेतुत्वश्रवणाच्च।

**पूर्वं तु बादरायणो हेतुव्यपदेशात्** इति-

तु शब्द पक्षनिरासार्थः। फलं पूर्वोक्तं परमात्मानं वेदाचार्यो मन्यते। "पुण्येन पुण्यं लोकं नयती" ति "यमेवैष वृणुते तेन लभ्य"[124] इति च परस्य तद्धेतुत्वव्यपदेशात् इति परमात्मनः सेतुत्व नियामकृत्व फलदातृत्व निरुपणम्। तदित्थं द्वितीयपादे जीवस्य स्वप्नावस्था वर्णिता। सर्वध्यक्षात् सर्वज्ञात् सर्वशक्तेर्महोदारात् तत्तत्कर्मभिराराधितात् परमात्मन एवैहिकासुष्मिक भोगजातस्य स्वात्मभावापत्तिरूपमोक्षस्य प्राप्तेः। भवतीति च बादरायणमतम् श्रुतिसम्मतमिति प्रतिपादितम्।

---

[124] - मुण्ड० ३.२.३ ॥

## ❖ तृतीयपादस्य वेदान्तकौस्तुभप्रभायाः समीक्षात्मकः तृतीयखण्डः-

तदेवं जन्ममरणादिदुःखनिलयत्वरूपप्रपञ्चदोषोक्त्या ब्रह्मणो हेयसम्बन्धरहितत्वकल्याणगुणसागरत्वनिरूपणेन तस्यैव सर्वफलदायित्वनिरूपणेन च तत्तृष्णैव तदितरवितृष्णापूर्विका तत्प्राप्तिकारणमिति पादद्वयेन दर्शितम्।

इदानीं ब्रह्मोपासना तासु गुणोपसंहारविकल्पनिर्णयाय विद्या भेदाभेदविचारश्च प्रारभ्यते। अस्मिनपादे षट्त्रिंशत्यधिकरणानि सन्ति तानि।

- **सर्ववेदान्तप्रत्ययाधिकरणम्**
- **अन्यथात्वाधिकरणम्**
- **सर्वाभेदाधिकरणम्**
- **आनन्दाधिकरणम्**
- **कार्यव्याख्यानाधिकरणम्**
- **समानाधिकरणम्**
- **सम्बन्धाधिकरणम्**
- **सम्भृत्यधिकरणम्**
- **पुरुषविद्यधिकरणम्**
- **हान्यधिकरणम्**
- **साम्परायाधिकरणम्**
- **अनियमाधिकरणम्**
- **यावदधिकाराधिकरणम्**
- **अक्षराधिकरणम्**
- **अन्तरत्वाधिकरणम्**
- **कामाधिकरणम्**

- तन्निर्धारणाधिकरणम्
- प्रदानाधिकरणम्
- लिङ्गभूयस्त्वाधिकरणम्
- शरीरेभावाधिकरणम्
- अङ्गावबद्धाधिकरणम्
- भूमज्यायस्त्वाधिकरणम्
- शब्दादिभेदाधिकरणम्
- विकल्पाधिकरणम्
- यथाश्रयाश्रयिभावाधिकरणम्

**तृतीयोऽध्यायस्य तृतीयपादः सर्ववेदान्तप्रत्ययाधिकरणम्-**

अस्मिनधिकरणे पञ्चसूत्राणि सन्ति-

- सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात्
- भेदान्नेति चेदेकस्यामपि
- स्वाध्यायस्य तथात्वे हि समाचारेऽधिकाराच्च सववच्च तन्नियमः
- दर्शयति च
- उपसंहारोऽर्थाभेदाद्विधिशेषवत् समाने च

**सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात्** इति-

अनेकत्र प्रोक्तमुपासनमेकम्, चोदनाद्यविशेषात्

**भेदान्नेति चेदेकस्यामपि** इति-

विद्यायां पुन: श्रुत्या वेद्यभेदान्न विद्यैक्यमिति चेत्, न क्वचित्प्रतिपत्तृभेदात् क्वचित्प्रकरणशुद्ध्यर्थमेकस्यामपि विद्यायां पुनरुक्त्याद्युपपत्ते।

**स्वाध्यायस्य तथात्वे हि समाचारेऽधिकाराच्च सरवच्च तन्नियम:** इति-

यच्चाथर्वणे तेषामेवैतां ब्रह्मविद्यां वदेत शिरोव्रतं विधिवद्यैस्तु चीर्णमि ति शिरोव्रतं तदपि विद्याभेदकं न यत: स्वाध्यायाध्ययनाङ्गतया शिरोव्रतं विधीयते। तस्याध्यायनांगत्वे सति आथर्वणिकेतराग्रह्यतया तन्नियमोऽस्ति। यत: समाचाराख्ये ग्रन्थेऽपि वेदव्रतत्वेन शिरोव्रतमामनन्ति "नैतदचीर्णव्रतो अधीत" इति वचनाच्च् सौर्यादिहोमवच्च तन्नियम: संगत एव।

**दर्शयति च** इति-

"सर्वे वेदा यत्पदमामनन्ति"[125] इति श्रुतिदर्शयति च विद्यैकाम्।

**उपसंहारोऽर्थाभेदाद्विधिशेषवत् समाने च** इति-

वैद्यैक्ये सति गुणोपसंहार: कर्त्तव्य: प्रयोजनाभेदात्। अग्निहोत्रादिविधिशेषवत् इति सर्ववेदान्तोक्तविद्याया एकत्वावधारणाधिकरणम्।

## तृतीयोऽध्यायस्य तृतीयपादे अन्यथात्वाधिकरणम्-

अस्मिनधिकरणे चत्वारि सूत्राणि सन्ति-

- अन्यथा त्वं शब्दादिति चेन्नाविशेषात्
- न वा प्रकरणभेदात् परोवरीयस्त्वादिवत्
- संज्ञातश्चेत् तदुक्तमस्ति तु तदपि
- व्याप्तेश्च समञ्जसम्

---

[125] - कठो० २.१५ ॥

**अन्यथा त्वं शब्दादिति चेन्नाविशेषात्** इति-

"अथ हेममासन्यं प्राणमूचुस्त्वं न उद्गायेति तथेति तेभ्य एष प्राण उद्गायदि" ति वाजसनेयके श्रूयते "अथ ह य एवायं मुख्यप्राणस्तमुपासांचक्रिरे" इति छान्दोग्ये श्रूयते। किमत्र वैद्यैक्यमुत तद्भेद:? इति संशये विद्यैक्यमिति। ननु प्राणस्य वाजसनेयके "त्वं न उद्गाये" ति कर्त्तृकत्वं छान्दोग्ये च "त्वमुद्गीथम्" इति कर्मत्वमधीयते, अतो विद्यानानात्वमिति चेन्न, उपक्रमेऽविशेषात्। "उद्गीथेनात्ययाम" उद्गीथमाजर्हुरनेनैनानभिऽनिष्याम" उद्गीथस्यैवोपास्यत्वप्रतीतेः। तस्मादुभयत्र विद्यैक्यमिति प्राप्तम्।

**न वा प्रकरणभेदात् परोवरीयस्त्वादिवत्** इति-

तत्रोच्यते, न विद्यैक्यम्, "ओमित्येतदक्षरमुद्गीथमुपासीते" त्युद्गीथे प्रणवमुपास्यं प्रक्रम्यो "उद्गीथमाजर्हु" रिति वचनात् तदवयवभूत: प्रणव: प्राणदृष्टेर्विषय: छान्दोग्ये विहित:। वाजसनेयके तु अविशेषेण "उद्गीथेनात्ययाम्" इत्युपक्रमात् कृत्स्नोद्गीथ: प्राणदृष्टेर्विषय:। इत्थं प्रक्रमभेदाद्विद्याभेद एव सिध्यति। यथोद्गीथावयवे प्रणवे हिरण्यमयपुरुषदृष्टिविधानात् परमात्मदृष्टिविधानाविशेषेऽपि परोवरीयस्त्वादिगुणविशिष्टविधानमन्यत्।

**संज्ञातश्चेत् तदुक्तमस्ति तु तदपि** इति-

संज्ञातो विद्यैक्यमिति चेत्तस्या: दुर्बलत्वं "न वा प्रकरणभेदादि" त्यनेनोक्तं संज्ञैकत्वं तु विधेयभेदेऽप्यस्ति। यथाग्निहोत्रसंज्ञानित्याऽग्निहोत्रे कुण्डपायिनामयनाग्निहोत्रे च।

**व्याप्तेश्च समञ्जसम्** इति-

छान्दोग्ये सर्वासूद्गीथविद्यासु प्रथमं प्रस्तुतस्य प्रणवस्योपास्यत्वेन व्याप्ते: "उद्गीथमाजर्हुरि" ति मध्यगतस्योद्गीथशब्दस्यापि प्रणवविषयत्वं समञ्जसम्। छान्दोग्ये उद्गीथावयव: प्रणव: वाजसनेयके कृत्स्नोद्गीथ: प्राणदृष्ट्योपास्य इति विद्याभेद: इति उद्गीथोपासनाया विभिन्नत्व प्रतिपादितम्।

**तृतीयोऽध्यायस्य तृतीयपादे सर्वाभेदाधिकरणम्-**

अस्मिनधिकरणे एकमेवसूत्रमस्ति-

**सर्वाभेदादन्यत्रेमे** इति-

छान्दोग्ये वाजसनेयके च प्रणसंवादे ज्येष्ठ्यश्रेष्ठ्यगुणोपेत: प्राण उपास्यतया वागादयो वशिष्ठ्यत्वाधिगुणका उक्ता:। ते च गुणा: प्रणे समर्पिता:। कौषीतकीप्राणसंवादे तु वागादीनां गुणा: उक्ता: न तु प्राणे समर्पिता:। तत्रोच्यते अन्यत्र कौषीतकीप्राणसंवादेऽपि प्राणसम्बन्धित्वेन ते उपादेया: ज्येष्ठश्रेष्ठ्यनिमित्तस्य वागादीनां प्राणायत्तत्वादे: सर्वत्रैक्याम् इति प्राणोपासनायां वशिष्ठत्वादिगुणानां सर्वत्रोपादेयत्व निरूपणम्।

**तृतीयोऽध्यायस्य तृतीयपाद: आनन्दाधिकरणम्-**

अस्मिनधिकरणे सप्तसूत्राणि सन्ति-

- आनन्दादय: प्रधानस्य
- प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे
- इतरेत्वर्थसामान्यात्
- अध्यानाय प्रयोजनाभावात्
- आत्मशब्दाच्च

- आत्मगृहीतिरितरवदुत्तरात्
- अन्वयादिति चेत् स्यादवधारणात्

**आनन्दादय: प्रधानस्य** इति-

सर्वत्र गुणिनोऽभेदानन्दादयो गुणा: परविद्यासूपसंहर्त्तव्या:।

**प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे** इति-

परस्वरूपगुणप्राप्तौ प्रियशिरस्त्वादीनां प्राप्तिस्तु नेष्यते, शिर आद्यवयवभेदे सति ब्राह्मण्युपचयापचयप्रसङ्गात्।

**इतरेत्वर्थसामान्यात्** इति-

आनन्दादयस्तु गुणा गुणिन: सत्रैक्यादुपसंह्रियन्ते।

**अध्यानाय प्रयोजनाभावात्** इति-

"तस्य प्रियमेव शिर:" इत्याद्यभिधानन्तु अनुचिन्तनार्थमितरप्रयोजनाभावात्।

**आत्मशब्दाच्च** इति-

"अन्योऽन्तर आत्मा"[126] इत्यात्मन: शिर: पक्षाद्यसम्भवात् तदनुध्यानाय तदभिदानम्।

**आत्मगृहीतिरितरवदुत्तरात्** इति-

"अन्योऽन्तर आत्मा"[127] इत्येवात्मशब्देन परमात्मन एव ग्रहणं यथा "आत्मा वा इदमेक एवाग्र आसीत्"[128] इत्यत्रात्मशब्देन परमात्मन एव ग्रहणं तद्वत। "सोऽकामयत वहुस्यामि"[129] त्यानन्दमयविषयादुत्तरवाक्यादपि तद्ग्रहणम्।

---

[126] -तैत्तरीय० २.२.३ ॥

**अन्वयादिति चेत् स्यादवधारणात्** इति-

पूर्वत्रानात्मनि प्राणादावात्मशब्दान्वयदर्शानाद् "आत्माऽनन्दमय"[130] इत्यात्मशब्देन परमात्मनोऽपरिग्रह इति चेत् स्यादेव तेन शब्देन तत्परिग्रहः पूर्वत्रापि परमात्मबुद्ध्यैवानात्मनि प्राणादावात्मशब्दान्वयनिश्चयात् इति आनन्दरूपत्वादि विशेषणानां न तु प्रियशिरस्त्वादीनां सर्वत्र ब्रह्मोपासनायां संयोज्यत्वनिरूपणम्।

**तृतीयोऽध्यायस्य तृतीयपादः कार्यव्याख्यानाधिकरणम्-**

अस्मिनधिकरणे एकमेव सूत्रमस्ति-

**कार्याख्यानादपूर्वम्** इति-

"अशिष्यन्नाचामेदशित्वा चाचामेदेतमेव तदनमनग्नं कुरुते" त्यादिनाऽपां प्राणवासस्त्वध्यानमप्राप्तं विधीयते, स्मृत्याचारप्राप्तस्याचमनस्य तु तत्रानुवादमात्रत्वात् इति आचमनस्य निरूपणम्।

**तृतीयोऽध्यायस्य तृतीयपादः समानाधिकरणम्-**

अस्मिनधिकरणे एकमेव सूत्रमस्ति-

**समान एवं चाभेदात्** इति-

वाजसनेयिशाखायां "सत्यं ब्रह्मेत्युपासीते" त्यारम्भ "आत्मानमुपासीत मनोमयमि" त्यादि। अग्निरहस्ये "मनोमयोऽयं पुरुष" इत्यादि बृहदारण्यके च

---

[127] -तैत्तरीय० २.२.३ ॥
[128] -ऐतरीय० २.४.११ ॥
[129] --तैत्तरीय० २.६ ॥
[130] -

शाण्डिल्यविद्याऽम्नाता सा च यथाऽनेकशाखासु वेद्यैक्याद्विद्यैक्यं तथैकस्यामप्येकैव विद्यैक्याद्गुणोपसंहार: इति विभिन्नथानोक्तशाण्डिल्यविद्याया एकत्व प्रतिपादनम्।

## तृतीयोऽध्यायस्य तृतीयपाद: सम्बन्धाधिकरणम्-

अस्मिनधिकरणे त्रीणि सूत्राणि सन्ति-

- सम्बन्धादेवमन्यत्रापि
- न वा विशेषात्
- दर्शयति च

**सम्बन्धादेवमन्यत्रापि** इति-

यथा शाण्डिल्यविद्यैकं तत्सम्बन्धाद्गुणोपसंहार एवं "सत्यं ब्रह्म" इत्युपक्रमादेकविद्यात्वसम्बन्धात् "तस्योपनिषदहमि: त्यधिदेवतं "तस्योपनिषदहमित्यध्यात्ममि" ति श्रुत्युक्ते द्वे नामनी उपसंह्रियते इति पूर्वपक्ष:।

**न वा विशेषात्** इति-

सिद्धान्तस्तु स्थानभेदादुपसंहारो नोपपद्यते इति।

**दर्शयति च** इति-

"तस्यैतस्य तदेव रूपं यदमुष्य रूपमि" ति श्रुतिश्चाक्षिस्थादित्यस्थयोर्गुणोपसंहाराभावं दर्शयति इति रहस्यानामुपसंहारभावनिरूपणम्।

## तृतीयोऽध्यायस्य तृतीयपाद: सम्भृत्यधिकरणम्-

अस्मिनधिकरणे एकमेव सूत्रमस्ति-

**सम्भृतिद्युव्याप्त्यपि चातः** इति-

"ब्रह्मज्येष्ठा वीर्याः सम्भृतानि ब्रह्माग्रे ज्येष्ठं दिवमाततान" इत्यादिना तैत्तिरीयकविहितानां सम्भृतिज्येष्ठा वीर्या सम्भृतानि च द्युव्याप्तिप्रभृतीनां गुणानामपि स्थानभेदादेव विद्यान्तरे नोपसंहारः इति सम्भृतद्व्यु याप्तिप्रभृतिगुणानामुपसंहार निरूपणम्।

## तृतीयोऽध्यायस्य तृतीयपादः पुरुषविद्यधिकरणम्-

अस्मिनधिकरणे एकमेव सूत्रमस्ति-

**पुरुषविद्यायामपि चेतरेषामनाम्नानात्** इति-

"पुरुषो वाव यज्ञ" इत्यादिना छान्दोग्ये "तस्यैवं विदुषो यज्ञस्य" इत्यादिना तैत्तिरीयके च श्रूयमाणायां पुरुषविद्यायामपि एकत्रोक्तानां "तस्य यानि चतुर्विंशतिवर्षाणि तत्प्रातः सवनमि" त्यादीनां प्रकाराणामन्यत्रानाम्नात् विद्याभेदः इति पुरुषविद्याया विभिन्नत्वनिरूपणम्।

## तृतीयोऽध्यायस्य तृतीयपादः हान्यधिकरणम्-

अस्मिनधिकरणे एकमेव सूत्रमस्ति-

**वेधाद्यर्थभेदात्** इति-

"सर्वं प्रविध्य हृदयं प्रविध्ये" त्यादि मन्त्राणां "देवा ह वै सत्रं निषेदुरि" त्यादिनोक्तानां वागादिकरमणां च न विद्यायामुपसंहारः। कुतः? वेधादीनामर्थानां विद्याभिन्नत्वात् इति वेधादीनां विद्याभिन्नत्वनिरूपणम्।

## तृतीयोऽध्यायस्य तृतीयपादः साम्परायाधिकरणम्-

अस्मिनधिकरणे षट् सूत्राणिसन्ति-

- ह्यानौ तूपायनशब्दशेषत्वात् कुशाच्छन्दस्तुत्युपगानवत् तदुक्तम्
- साम्पराये तर्त्तव्याभावात्तथा ह्यन्ये
- छन्दत उभयाविरोधात्
- गतेरर्थवत्त्वमुभयथाऽन्यथा हि विरोध:
- उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत्
- अनियम: सर्वेषामविरोध: शब्दानुमानाभ्याम्

**ह्यानौ तूपायनशब्दशेषत्वात् कुशाच्छन्दस्तुत्युपगानवत् तदुक्तम्** इति-

"तदा विद्वान् पुण्यपापे विधूये" त्यादि श्रुतिप्रोक्तायां पुण्यपापविमिचनात्मिकायां हानौ "तस्य पुत्रा दायमुपयन्ति सुहृद: साधुकृत्यां द्विषन्त: पापकृत्यामि" ति विद्वत्युक्त पुण्यपापग्रहणभूतमुपायनमुपसंह्रियते। कुत:? शाखान्तरीयोपायनशब्दस्य हानिशब्दशेषत्वात्। यथा "कुशा वानस्पत्या" इति कुशानां वानस्पत्यत्वप्रकाशकवाक्यशेषता "मौदुम्बरा" इति वाक्यं भजते। यथा च "छान्दोभि: स्तुवीते" ति वाक्यशेषतां "देवच्छन्दांसि पूर्वाणी ति वाक्यं भजते। यथा च "हिरण्येन षोड़शिन: स्तोत्र मुपाकरोती" ति वाक्यशेषतां समयाध्युषिते सूर्ये इति वाक्यं गच्छति। यथा च "ऋत्विज उपगायती" ति अस्य "नाध्वर्युरुपगायती ति शेषतामाद्यते। "अपि वाक्यशेषत्वादन्यायत्वात् विकल्पस्ये" त्याद्युक्तं जैमिनिनाऽपि।

**साम्पराये तर्त्तव्याभावात्तथा ह्यन्ये** इति-

शरीराद्युत्क्रमणवेलायां नि:शेषतया पापुण्यहानि:। कुत:? शरीरवियोगात् पश्चात्ताभ्यां तर्त्तव्यभोगाभावात्। एवमेवान्येऽधीयन्ते "अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशत एव सम्प्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन

रूपेणाभिनिष्पद्यते" इत्यादि। एवं सति देहवियोगसमये जाते एव कर्मक्षयो "विरजां नदीं तां मनसात्येति तत् सुकृतदुष्कृते विधूनुते" इति नदीरारुणान्तरं पठ्यते।

**छन्दत उभयाविरोधात्** इति-

विदुषः पुण्यं पापं क्रमात् सुहृद्दुर्हृच्च छन्दतः प्रप्नोत्येवमुभयाविरोशो भवति।

**गतेरर्थवत्त्वमुभयथाऽन्यथा हि विरोधः** इति-

सुकृतदुष्कृतयोरविशेषतया निवृत्त्या गतेरर्थवत्त्वं यदि सुकृतमनुवर्तेत तदा तत्फलभोगानन्तरम् आवृत्तिः स्यात्। एवं सत्यनावृत्तिश्रुतिविरोधो भवेत्।

**उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत्** इति-

ब्रह्मोपासकस्य शरीरवियोगकाले सर्वकर्मक्षयेऽपि पन्था उपपन्नः। कुतः? "परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यन्ते स तत्र पर्येति जक्षन् क्रीडन् रममाणः"[131] इत्यादिषु देहादिसम्बन्धलक्षणार्थोपलब्धेः। तथा भूपसेवकस्य भौमार्थसिद्धिस्तद्वत्। स स्थूलशरीरसर्वकर्मक्षयेऽपि विद्याप्रभावाद्विशिष्टस्थानगमनार्थं सूक्ष्मशरीरमनुवर्तते तद्वियोगान्तरं युक्तं श्रुतिप्रोक्तं रूपं विद्वान् प्राप्य ब्रह्मभावापन्नो भवतीति भावः।

**अनियमः सर्वेषामविरोधः शब्दानुमानाभ्याम्** इति-

उपकोशलविद्यापञ्चाग्निविद्यादिषु श्रूयमाणा गतिस्तद्विद्यावतामेवेति नियमो न। किन्तु सा ब्रह्मोपासीनानां सर्वेषां या हि गतेः सर्वसाधारणत्वे सति। "य एवमेतद्विदुर्ये चेमेऽरण्ये श्रद्धां सत्यमुपासीते तेऽर्चिषमभिसम्भवन्ति। अग्निर्ज्योतिरहः शुक्लः षणमासा उत्तरायणम्। तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः इत्यादि

[131] -छान्दो० ८.३.४॥

श्रुतिस्मृतिभ्यामविरोध: इति विदुषो देहान्ते देवयानगतिप्राप्ति अपि च विरजानदीतरणान्तरं पुण्यपापक्षय तेषाञ्च सुहृदादिना भोक्तव्यत्व निरूपणम्।

## तृतीयोऽध्यायस्य तृतीयपाद: अनियमाधिकरणम्-

अस्मिनधिकरणे एकमेव सूत्रमस्ति-

**यावदधिकारमवस्थितिराधिकारिकारणाम्** इति-

वशिष्ठादीनां त्वधिकारफलकर्मवशाद्यावदधिकारमवस्थिति: इति प्रतिपादितम्।

## तृतीयोऽध्यायस्य तृतीयपाद यावदधिकाराधिकरणम्-

अस्मिनधिकरणे द्वौ सूत्रौ स्त:-

- अक्षरधियां त्ववरोध: सामान्यतद्भावाभ्यामौपसदवत्तदुक्तम्
- इयदामननात्

**अक्षरधियां त्ववरोध: सामान्यतद्भावाभ्यामौपसदवत्तदुक्तम्** इति-

"एतद्वैतदक्षरं गार्गि! ब्रह्मणा अभिवदन्ति अस्थूलमनण्वह्रस्वमि"[132] त्यक्षरसम्बन्धिनीनामस्थूलत्वादिधियां ब्रह्मविद्यासु सर्वासु परिग्रह:। कुत:? सर्वत्राक्षरस्य ब्रह्मण: प्रधानस्य समानत्वाद्गुणानां चास्थूलत्वादीनां तत्स्वरूपानुसन्धानान्तर्भावाच्च। यथा जामदग्न्येऽहीने पुरीडाशिनीपूपसत्सु सामवेदपठितस्य मन्त्रस्या "ग्रेर्वेर्होत्रमि" त्यादेर्याजुर्वेदिकेन स्वरेण प्रयोग: क्रियते तदुक्तं "गुणमुख्यव्यतिक्रमे तदर्थत्वात् मुख्येन वेदसंयोग" इति।

---

[132] - वृह०

**इयदामननात्** इति- अस्थूलत्वादिविशेषितैरानन्दादिभि: सर्वोत्कृष्टब्रह्मचिन्तानाद्धेतोरियदानन्दादिकं सर्वत्रानुवर्त्तनीयं प्रधानानुवर्त्तिनोऽपि सर्वकर्मत्वादय: यत्रोक्तास्तत्रानुसन्धेया: इति प्रतिपादितम्।

## तृतीयोऽध्यायस्य तृतीयपाद: अक्षराधिकरणम्-

अस्मिनधिकरणे द्वौ सूत्रौ स्त:-

- अन्तराभूतग्रामवत् स्वात्मनोऽन्यथाभेदानुपपत्तिरिति चेन्नोपदेशान्तरवत्
- व्यतिहारो विशिंषन्ति हीतरवत्

**अन्तराभूतग्रामवत् स्वात्मनोऽन्यथाभेदानुपपत्तिरिति चेन्नोपदेशान्तरवत्** इति-

ननु बृहदारण्यके "यत् साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरस्तन्मे व्याचक्ष्व" इत्युषस्तप्रश्ने "य: प्राणेन प्राणिति स ते आत्मा सर्वान्तर" इति देहाद्यन्तरत्वेन प्रत्यगात्मसम्बन्ध्युपदेश:। तस्यैव प्राणापानादिहेतुत्वात्। तथैव तत्र "यदेव साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरस्तन्मे व्याचक्ष्वे" ति कहोलप्रश्ने "योऽशनायापिपासे शोकं मोहं जरां मृत्युमत्येति" त्यादिप्रतिवचनं तत्र तु परमात्मविषय उपदेश इति विद्याभेद: इतरथा प्रतिवचनभेदानुपपत्तिरिति चेन्न। उभयत्र मुख्यस्यैव सर्वान्तर्यामिन: प्रश्नप्रतिवचनयोर्विषयत्वात्। यथा सत्वविद्यायां सत: परमात्मनस्तत्तद्गुणप्रतिपादनाय "भगवांस्त्वेवमेतद्ब्रवीतु भूय एव मां भगवान्विज्ञापयत्वि" ति प्रश्नस्य "एषोऽणिमैतदात्म्यमिदं सर्वं तत्सत्यमि" ति प्रतिवचनस्य चावृतिर्दृश्यते। तद्वदत्रापि वेद्यस्याशनाद्यतीतत्वप्रतिपादनाय प्रश्नप्रतिवचनावृत्तिरूपपद्यते।

**व्यतिहारो विशिंषन्ति हीतरवत्** इति-

सर्वप्राणिप्राणनादिहेतुत्वेन जीवद्व्यावृत्तस्य परस्यानुसन्धानमुषस्तवत्कहोलेनापि कार्यं तथाऽशनयाद्यतीतत्वेन जीवाद्व्यावृत्तस्य कहोलवदुषस्तेनापि कार्यमेवमन्योऽन्यमनुसन्धानव्यत्यय:। एवं सति जीवाद्ब्रह्मव्यावृत्तं भवति। यतो याज्ञवल्क्यप्रतिवचनान्युभयत्रैकं सर्वात्मानमुपास्यं विशिंषन्ति। यथा सद्विद्यायामेकमेव सद्ब्रह्मसर्वाणि प्रतिवचनानि विशिंषन्ति इति परमात्मन एव सर्वान्तरत्व निरूपणम्।

**तृतीयोऽध्यायस्य तृतीयपाद: अन्तरत्वाधिकरणम्-**

अस्मिनधिकरणे एकमेव सूत्रमस्ति-

**सैव हि सत्यादय:** इति-

सैव सत्यशब्दाभिहिता "सेयं देवतैक्षत" "तेज परस्यां देवतायामि" ति प्रकृतैव खलु यथा "सौम्य मधुमधुकृतो निस्तिष्ठन्ति" इत्यादि पर्यायेष्वनुवर्त्तते "ऐतदात्म्यमिदं सर्वं तत् सत्यमि"[133] ति प्रथमपर्याये पठिता एव सत्यादय: सर्वेषु पर्यायेषूपसंह्रियन्ते इति प्रतिपादितम्।

**तृतीयोऽध्यायस्य तृतीयपाद: कामाधिकरणम्-**

अस्मिनधिकरणे त्रीणि सूत्राणि सन्ति-

- कामादीतरत्र तत्र चायतनादिभ्य:
- आदरादलोप:
- उपस्थितेऽतस्तद्वचनात्

**कामादीतरत्र तत्र चायतनादिभ्य:** इति-

---

[133] - छान्दो० ६.८.७ ॥

"अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्मदहरोऽस्मिन्नन्तराकाशस्तस्मिन्यदन्तस्तदन्वेष्टव्यमि"[134] ति उपक्रम्य "एष आत्मा अपहतपाप्मा" इत्यादिना सत्यकामत्वादिगुणवतः छान्दोग्ये "स वा एष महानज आत्मा योऽयं विज्ञानमयः प्राणेषु एषोऽन्तर्हृदये आकाशस्तस्मिंच्छते, सर्वस्य वशी सर्वस्येशान"[135] इति वशित्वादिगुणवतः परमात्मन उपासत्वं वाजसनेयके च श्रूयते। इहोभयत्र विद्यैक्यं यतः सत्यकामत्वादि वाजसनेयके वशित्वादि च छान्दोग्ये ग्रहीतव्यम्। कुतः? आयतनाद्यविशेषात्।

**आदरादलोपः** इति-

आदरादाम्नातानां सत्यकामत्वादीनां प्रतिषेधो नास्ति "नेह नाने" ति प्रतिषेधस्याब्रह्मात्मकपदार्थपरत्वात्।

**उपस्थितेऽतस्तद्वचनात्** इति-

उक्तलक्षणया ब्रह्मोपासनया ब्रह्मोपसम्पन्ने सर्वलोकेषु कामचारो भवति। ननु तत्तल्लोकप्राप्तिसङ्कल्पपूर्वकं तत्तत्साधनानुष्ठानं विना कुतः सर्वत्र कामचारः? तत्रोच्यते। उपसम्पत्तेरेव हेतोः "परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते"[136] "स स्वराड् भवति तस्य सर्वेषु लोकेषु कामचारो भवतिः ति वचनात् इति निरूपणम्।

**तृतीयोऽध्यायस्य तृतीयपादः तन्निर्धारणाधिकरणम्-**

अस्मिनधिकरणे एकमेव सूत्रमस्ति-

**तन्निर्द्धारणानियमस्तद्दृष्टेः पृथग्घ्यप्रतिबन्धः फलम्** इति-

---

[134] -छान्दो० ८.१.१ ॥

[135] -वृहदा० ४.४.२२ ॥

[136] -छान्दो० ८.३.४ ॥

"ओमित्येतदक्षरमुद्गीथमुपासीते" त्यादिकर्माङ्गाश्रयोपासनस्य कर्मस्वनियमः। कुतः? "तेनोभौ कुरुते यश्चैतदेवं वेद यश्च नैवं वेदे" ति श्रुतौ तस्यानियमस्य दर्शनात्। अनुपासकस्यापि प्रणवेन कर्माङ्गभूतेन कर्माणि कर्त्तृत्वश्रवणादुपासनकर्मस्वनियतत्वं निश्चीयते। यतश्च कर्मफलादुपासनस्य पृथक् फलं "यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवती" त्युपलभ्यते इति ओङ्कारस्य निरूपणं।

## तृतीयोऽध्यायस्य तृतीयपादः प्रदानाधिकरणम्-

अस्मिनधिकरणे एकमेव सूत्रमस्ति-

**प्रदानवदेव तदुक्तम** इति-

दहरस्य गुणिनस्तद्गुणविशिष्टतया गुणचिन्तनेऽपि चिन्तनमावर्त्तनीयम्। "इन्द्राय राज्ञे पुरोडाशमेकादशकपालं निर्वपेदिन्द्रायाधिराजाय स्वराज्ञे" इति पुरोडाशप्रदानवत्तदुक्तम् "नाना वा देवतापृथक्ज्ञानादि" ति इति निरूपणम्।

## तृतीयोऽध्यायस्य तृतीयपादः लिङ्गभूयस्त्वाधिकरणम्-

अस्मिनधिकरणे एकमेव सूत्रमस्ति-

**लिङ्गभूयस्त्वात् तद्धि बलीयस्तदपि** इति-

"मनश्चितो वाक्चितः प्राणचितश्चक्षुश्चितः कर्मचितोऽग्निचित" इत्याद्यग्न्यः "यत्किञ्चेमानि मनसा संकल्पयन्ति तेषामेव साकृति" रिति "तान् हैतानेवंविदे सर्वदा सर्वाणि भूतानि विचिन्वन्त्यपि स्वपते" इत्येवमादिलिङ्गानां बाहुल्याद्विद्यामयक्रत्वङ्गभूता एव। लिङ्गं हि प्रकरणाद्बलीयस्तदपि शेषलक्षणे उक्तं "श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षादि" ति इति निरूपणम्।

## तृतीयोऽध्यायस्य तृतीयपादः शरीरेभावाधिकरणम्-

अस्मिनधिकरणे सप्त सूत्राणि सन्ति-

- पूर्वविकल्पः प्रकरणात् स्यात् क्रिया मानसवत्
- अतिदेशाच्च
- विद्यैव तु निर्धारणात् दर्शनाच्च
- श्रुत्यादिबलईयस्त्वाच्च न बाधः
- अनुबन्धादिभ्यः प्रज्ञान्तरपृथक्त्ववत् दृष्टश्च तदुक्तम्
- न सामान्यादप्युपलब्धेर्मृत्युवत् न हि लोकापत्तिः
- परेण च शब्दस्य ताद्विध्यं भूयस्तात्त्वनुबन्धः

**पूर्वविकल्पः प्रकरणात् स्यात् क्रिया मानसवत्** इति-

अथ पूर्वः पक्षः "इष्टकाभिरग्निं चिनुत" इति विहितस्य क्रियामयस्य पूर्वस्यैवायं विकल्पः प्रकरणात् स्यात्। लिङ्गस्यात्रार्थवादस्थत्वेन बलीयस्त्वाभावात् उक्ता अग्नयः क्रियारूपा एव मनो ग्रहं गृह्णातीतिवत्।

**अतिदेशाच्च** इति-

"तेषामेकैक एव तावान्यावनसौ पूर्व इति पूर्वस्याग्नेवीर्यं तेष्वतिदिश्यते अतस्तेव् क्रियारूपा एव।

**विद्यैव तु निर्धारणात् दर्शनाच्च** इति-

सिद्धान्ते विद्यात्मका एव ते कुतः? "ते हैते विद्याचित एव" इति निर्द्धारणात्। अत्र "येषामङ्गिनो विद्यामयक्रतोस्ते मनसाऽधीयन्त मनसा चीयन्त मनसैषु ग्रहा

अगृह्यन्त मनसा स्तुवन्तु शंसत् यत्किञ्च यज्ञे कर्म क्रियते" इत्यादौ तदङ्गभूतविद्यामक्रतुप्रतीतेश्च।

**श्रुत्यादिबलीयस्त्वाच्च न बाध:** इति-

"ते हैते विद्याचित एव" इति श्रुते: "एवं विदे सर्वदा सर्वाणि भूतानि विचिन्वन्ति" इतिलिङ्गस्य "विद्यया हैवैते एवं विदश्चिता भवन्ति" इति वाक्यस्य च प्रकरणाद्बलीयस्तवात्तेषामग्नीनां विद्यामयक्रत्वङ्गताबाधो न।

**अनुबन्धादिभ्य: प्रज्ञान्तरपृथक्त्ववत् दृष्टश्च तदुक्तम्** इति-

"मनसैषु ग्रहा अगृह्यन्ते" त्यादिभ्य: स्तोत्रशस्त्रादिभ्योऽनुबन्धेभ्य: श्रुत्यादिभ्यश्च विद्यामय: क्रतु: पृथगेव शाण्डिल्यादिविद्यान्तरपृथग्वत्। तथा सति विधि: परिकल्प्यते। दृष्टश्चानुवादसरूपे "यदेवविद्यया करोती" त्यादौ कल्प्यमानो विधि: "वचनानित्वपूर्वत्वादि" त्युक्तं च।

**न सामान्यादप्युपलब्धेर्मृत्युवत् न हि लोकापत्ति:** इति-

मानसग्रहसमान्यादप्येषां न क्रियामयक्रत्वङ्गत्वम्, विद्यारूपत्वोपलब्धे:। "स एष एव मृत्युर्य एतस्मिन् मण्डले पुरुष:" "अग्निर्वै मृत्युरि" त्यग्न्यादित्य पुरुषयोर्मन: सादृश्येन वैषम्यापगम:। न हि लोको गौतमाग्निर त्यग्नेर्लोकापत्ति:।

**परेण च शब्दस्य ताद्विध्यं भूयस्त्वात्त्वनुबन्ध:** इति-

"अयं वाव लोक एषोऽग्निचित" इत्यनन्तरेण चास्य शब्दस्य मनश्चिदाद्यग्निविषयस्य ताद्विधं मनश्चिदादिषूपादेयानामग्न्यङ्गानां भोयस्त्वाद्बाहुत्वात्तेषां क्रियाऽग्निसन्निधावनुबन्ध: इति वाजसनेयश्रुत्युक्त अग्निरहस्ये वर्णितं।

**तृतीयोऽध्यायस्य तृतीयपाद: अङ्गावबद्धाधिकरणम्-**

अस्मिनधिकरणे चत्वारिसूत्राणि सन्ति-

- एक आत्मन: शरीरे भावात्
- व्यतिरेकस्तद्भावभावित्वान्नतूपलब्धिवत्
- अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम्
- मन्त्रादिवद्वाऽविरोध:

**एक आत्मन: शरीरे भावात्** इति-

उपासनवेलायां बद्धावस्थ: प्रत्यगात्मा चिन्तनीय:, शरीरे तदृशस्यैवात्मन: सत्त्वादित्येके।

**व्यतिरेकस्तद्भावभावित्वान्नतूपलब्धिवत्** इति-

बद्धाकाराद्विलक्षणो मुक्ताकार: प्रत्यगात्मा साधनकालेऽनुसन्धेयस्तादृग्रूपस्यैव मुक्तौ भावित्वात्। ध्यानानुरूपरमात्मप्राप्तिवत् इति उपासनाकाले जीवस्य स्वीय मुक्तास्वरूपस्य चिन्तनीयत्व निरूपणम्।

**अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम्** इति-

"ओमित्येतदक्षमुद्गीथमुपासीते" त्येवमाद्या: उद्गीथाङ्गप्रतिबद्धा उपासना न शाखास्वेव व्यवस्थिता:। अपि तु प्रतिवेदं सर्वशाखास्येव प्रतिबध्यन्ते। यत: उद्गीथादिश्रुतेर्विशेषात्।

**मन्त्रादिवद्वाऽविरोध:** इति-

यथा "कुटरूरसी" ति मन्त्र: यथा वा प्रयाजास्तद्वदन्यत्रोक्तानामुपासनानामितरत्र योगोऽविरोध: इति अङ्गाबद्धाधिकरणम् प्रतिपादितम्।

## तृतीयोऽध्यायस्य तृतीयपाद: भूमज्यायस्त्वाधिकरणम्-

अस्मिनधिकरणे एकमेव सूत्रमस्ति-

**भूम्न: क्रतुवज्ज्यायस्त्वं तथाहि दर्शयति** इति-

वैश्वानरविद्यायां समग्रोपासनस्य प्राशस्त्यं यथा पौर्णमासादीनां साङ्गानामेक: प्रयोग: एवं "मूर्द्धा ते व्यपतिष्यत् यन्मां नागमिष्ये" इत्यादिका प्रत्यङ्गमुपासने दोष ब्रुवन्ती, समस्तोपासनस्य प्रशस्ततां दर्शयति श्रुति: इति वैश्वानरविद्यायां समग्रोपासनस्य निरूपणम्।

## तृतीयोऽध्यायस्य तृतीयपाद: शब्दादिभेदाधिकरणम्-

अस्मिनधिकरणे एकमेव सूत्रमस्ति-

**नानाशब्दादिभेदात्** इति-

शाण्डिल्यविद्यादीनां नानात्वं कुतस्तच्छब्दादिभेदात् इति विभिन्नविद्यानां नानात्वनिरूपितम्।

## तृतीयोऽध्यायस्य तृतीयपाद: विकल्पाधिकरणम्-

अस्मिनधिकरणे द्वे सूत्रे स्त:-

- विकल्पोऽपिविशिष्टफलत्वात्
- काम्यास्तु यथाकामं समुच्चीयेरन्न वा पूर्वहेत्वभावात्

**विकल्पोऽपिविशिष्टफलत्वात्** इति-

विद्याभेद उक्तस्तत्रानुष्ठानविकल्पोऽविशिष्टफलत्वात्।

**काम्यास्तु यथाकामं समुच्चीयेरन्न वा पूर्वहेत्वभावात्** इति-

ब्रह्मप्राप्तिव्यतिरिक्तफलानुष्ठानेऽनियमो नियमप्रयोजकपूर्वोक्तहेत्वभावात् इति अनुष्ठानविकल्प निरूपणम्।

**तृतीयोऽध्यायस्य तृतीयपाद: यथाश्रयाश्रयिभावाधिकरणम्-**

अस्मिनधिकरणे षट् सूत्राणि सन्ति तानि-

- अङ्गेषु यथाश्रयभाव:
- शिष्टेश्च
- समाहारात्
- गुणसाधारण्यश्रुतेश्च
- न वा तत्सह भावोऽश्रुते:
- दर्शनाच्च

**अङ्गेषु यथाश्रयभाव:** इति-

बहुभिर्लिङ्गै: कर्माङ्गाश्रितानमुद्गीथादिविद्यानां नियमेन कर्मसूपादानमित्याक्षिपति उद्गीथादिष्वाश्रितानां विद्यानामुद्गीथादिवदङ्गभाव:।

**शिष्टेश्च** इति-

"उद्गीथमुपासीते" ति शासनाचोपादननियम:।

**समाहारात्** इति-

"होतृषदनाद्धैवापि दुरुद्गीथमनुसमाहरती" ति प्रणवोद्गीथयोरैक्येन सम्पादनाच्च।
दुरुद्गीथं दुष्टमुद्गीथं वेदनहीनम् उद्गाता स्वकर्मणि समुत्पन्नं वैगुण्यं होतृ षदनात् होतृकर्मण: शंसनात् समादधात् इत्यनेव समाधानं ब्रुवन्ती श्रुतिर्वेदनस्योपादननियमं दर्शयति।

**गुणसाधारण्यश्रुतेश्च** इति-

"तेनेयं त्रयी वर्त्तते" इति गुणसाधारण्यश्रुतेश्च।

**न वा तत्सह भावोऽश्रुते:** इति-

नाङ्गाश्रितानां विद्यानामङ्गत्वक्रतुषूपादाननियम: क्रत्वङ्गभावाश्रवणात्।

**दर्शनाच्च** इति-

"एवं विद्ध वै ब्रह्मा यां यजमानं सर्वंश्च ऋत्विजोऽभिरक्षती" ति श्रुतौ वेदनानियततादर्शनाच्च इति कर्माङ्गाश्रितानामुद्गीथादि निरूपणम्। तदेवं तृतीयपादे ब्रह्मोपासना तासु गुणोपसंहारविकल्पनिर्णयाय विद्या: भेदाभेदविचारश्च प्रारभ्यते। ताश्च त्रिविधा प्रतीकरूपाङ्गाश्रितरूपाहंग्रहरूपभेदात् इति कौस्तुभप्रभाग्रन्थरीत्या वर्णितम्।

❖ चतुर्थपादस्य वेदान्तकौस्तुभप्रभायाः समीक्षात्मकः चतुर्थखण्डः-

एतावत् पादत्रयेण जीवस्य जाग्रत् स्वप्न सुषुप्त्याद्यवस्थाः विवेचिताः। वेदनाध्ययनोपासनादिशब्दवाच्याया ब्रह्मविद्याया भेदाभेविचारस्तदनुष्ठानप्रकारश्च निरूपितः। सम्प्रति विद्यायाः स्वातन्त्रयं कर्मणस्तदङ्गत्वमिति निरूपणार्थं चतुर्थपादः प्रवर्तते। अस्मिन् पादे पञ्चविंशत्यधिकरणानि सन्ति-

- पुरुषार्थाधिकरणम्
- स्तुतिमात्राधिकरणम्
- पारिप्लवाधिकरणम्
- अग्नीन्धनाद्यधिकरणम्
- सर्वापेक्षाधिकरणम्
- शमदमाद्यधिकरणम्
- सर्वान्नानुमत्यधिकरणम्
- विहितत्वाधिकरणम्
- विधुराधिकरणम्
- तद्भूताधिकरणम्
- स्वाम्यधिकरणम्
- सहकार्य्यन्तरविद्याधिकरणम्
- अनाविष्काराधिकरणम्
- ऐहिकाधिकरणम्
- मुक्तिफलाधिकरणम्

## तृतीयोऽध्यायस्य चतुर्थपादे पुरुषार्थाधिकरणम्-

अस्मिनधिकरणे विंशतिसूत्राणि सन्ति-

- पुरुषार्थोऽत: शब्दादिति बादरायण:
- शेषत्वात् पुरुषार्थवादी यथान्येष्विति जैमिनि:
- आचारदर्शनात्
- तच्छ्रुते:
- समन्वारम्भणात्
- तद्वतो विधानात्
- नियमाच्च
- अधिकोपदेशात् तु बादरायणस्यैवं तद्दर्शनात्
- तुल्यं तु दर्शनम्
- असार्वत्रिकी
- विभाग: शतवत्
- अध्ययनमात्रवत:
- नाविशेषात्
- स्तुतयेऽनुमतिर्वा
- कामकारेण चैके
- उपमर्दं च
- ऊर्ध्वरेत:सु च शब्दे हि
- परामर्शं जैमिनिरचोदनाच्चापवदति हि
- अनुष्ठेयं बादरायण: साम्यश्रुते:
- विधिर्वा धारणवत्

**पुरुषार्थोऽत: शब्दादिति बादरायण:** इति-

ब्रह्मप्राप्तिर्विद्यात: "ब्रह्मविदाप्नोति परम्"[137] त्यादिशब्दादिति भगवान् वादरायणो मन्यते।

**शेषत्वात् पुरुषार्थवादो यथाऽन्येष्विति जैमिनि:** इति-

कर्माङ्गभूतकर्तृसंस्कारद्वारेण विद्याया: कर्माङ्गत्वं कर्त्तु: कर्मशेषत्वात् फलश्रुतिरर्थवाद:। यथा "पर्णमयी" द्रव्यादिष्वपापश्लाकश्रवणादिफलश्रुतिस्तद्वदिति जैमिनिर्मन्यते।

**आचारदर्शनात्** इति-

"जनको ह वैदेहो बहुदक्षिणेन यज्ञेनेजे" इत्यादि श्रुतिभ्यो जनकादीनामाचारदर्शनात्।

**तच्छ्रुते:** इति-

"यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवती" ति विद्याया: कर्मोपयोगित्वस्य श्रुते:।

**समन्वारम्भणात्** इति-

"तं विद्याकर्मणी समन्वारभेते" इति विद्याकर्मणो: साहित्यदर्शनाच्च्।

**तद्वतोविधानात्-** आचार्यकुलादेवदमधीत्य यथाविधानं गुरो: कर्मातिशेषेणमिसमावृत्य कुटुम्बे शुचौ देशे स्वाद्ध्यायमधीयान इति।

**नियमाच्च** इति-

---

[137] - तैत्तिरीय २.१.१ ॥

"कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समा"[138] इत्यादि नियमाच्च।

**अहिकोपदेशात् तु बादरायणस्यैवं तद्दर्शनात्** इति-

तत्रोच्यते, जीवात् कर्तुरधिकस्य सर्वेश्वरस्य सर्वनियन्तुर्वेद्यत्वेनोपदेशात् पुरुषार्थोऽत: इति भगवतो वादरायणस्य मतम्। "एष सर्वेश्वर: अन्त: प्रविष्ट: शास्ता जनानां सर्वस्येशान:" "तं त्वौपनिषदं पुरुषं पृच्छामि" "सर्वे वेदा यत्पदमामनन्ती"[139] त्यादि तद्दर्शनात्।

**तुल्यं तु दर्शनम्** इति-

विद्याया अकर्माङ्गत्वेऽपि "किमर्था वयमध्येष्यामहे किमर्था वयं यक्ष्यामहे" इत्यादि दर्शनं तुल्यम्।

**असार्वत्रिकी** इति-

"यदेव विद्यये" ति श्रुतिर्न सर्व विषया।

**विभाग: शतवत्** इति-

"तं विद्याकर्मणी समन्वारभेते" इत्यत्र फलद्वयनिमित्तशतविभागवद्विभागो ज्ञेय:।

**अध्ययनमात्रवत:** इति-

आचार्यकुलाद्वेदमधीत्ये" त्यत्र त्वध्ययनमात्रवत: कर्म विधीयते।

**नाविशेषात्** इति-

नियमावाक्यस्यापि नियमेन विद्वद्विषयकत्वायोगात्।

---

[138] - ईशावा०

[139] - कठो० २.१५॥

**स्तुतयेऽनुमतिर्वा** इति-

विद्यास्तुतये विदुषः "कुर्वन्नेवेह कर्माणी" ति कर्मानुज्ञा क्रियते।

**कामकारेण चैके** इति-

"किं प्रजया करिष्यामो येषां नोऽयमात्माऽयं लोक" इत्येके विदुषां स्वेच्छया गार्हस्थ्यत्यागमत् एवाभिधीयते।

**उपमर्द्दश्च** इति-

अतएव "विद्यया कर्म्मोपमर्दच्च क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे"[140] इत्यादिना पठन्ति।

**ऊद्ध्र्वरेतस्सु च शब्दे हि** इति-

ऊद्ध्र्वरेतस्सु आश्रमेषु विद्यादर्शनाच्च तस्याः स्वातन्त्र्यां निश्चीयते। ते तु 'त्रयो धर्मस्कन्धाः इत्यादिशब्दे दृश्यन्ते।

**परामर्श जैमिनिरचोदनाच्चापवदति हि** इति-

"त्रयो धर्मस्कन्धा" इत्यादौ तेषामाश्रमानामनुवादमात्रं विधायकशब्दाभावात्। "वीरहा वा एष देवानां योऽग्निमुद्वासयते" इत्याश्रमान्तरापवादश्रवणाच्चश्रमान्तरमननुष्ठेयमिति जैमिनिः।

**अनुष्ठेयं बादरायणः साम्यश्रुतेः** इति-

गार्हस्थ्येनाश्रमान्तरस्यानुवादवाक्ये तुल्यत्वश्रवणात्तदनुष्ठेमिति भगवान् वादरायणो मन्यते।

---

[140] - मुण्ड० २.२.८ ॥

**विधिर्वा धारणवत्** इति-

विधिरेवास्ति यथादिष्टाग्निहोत्रे श्रूयते अधस्तात् समिधं धारयन्ननुद्रवेदुपरि देवेभ्यो धारयती" ति वाक्यं भित्त्वोपरिधारणमपूर्वत्वाद्विधीयते तद्वत् इति विद्यायाः क्रत्वङ्गमात्रत्ववादखण्डनाधिकरणम् निरूपणम्-

**तृतीयोऽध्यायस्य चतुर्थपादे स्तुतिमात्राधिकरणम्-**

अस्मिनधिकरणे द्वे सूत्रे स्तः।

- स्तुतिमात्रमुपादानादिति चेन्नापूर्वत्वात्
- भावशब्दाच्च

**स्तुतिमात्रमुपादानादिति चेन्नापूर्वत्वात्** इति-

"स एष रसानां रसतमः परमः परार्ध्यौष्टमो य उद्गीथः इयमेवर्गाग्निः साम अयं वाव लोकः एषोऽग्निश्चितः तदिदमेवोकथमि" त्यादिकर्माङ्गोद्गीथादिस्तुतिमात्रं तत्सम्बन्धितया रसतमत्वादिरुपादानादिति चेन्न, अप्राप्तत्वादुद्गीथादिषु रसतमत्वादिदृष्टिविधानम्।

**भावशब्दाच्च** इति-

"उद्गीथमुपासीते" त्यादिविधिशब्दाच्च।

इति रसतमत्वादीनां निरूपणम्

**तृतीयोऽध्यायस्य चतुर्थपादे पारिप्लवाधिकरणम्-**

अस्मिनधिकरणे द्वे सूत्रे स्तः

- पारिप्लवार्था इति चेन्न विशेषितत्वात्

- तथा चैकवाक्यतोपबन्धात्

**पारिप्लवार्था इति चेन्न विशेषितत्वात्** इति-

वेदान्तेष्वाख्यानश्रुतयः पारिप्लवार्था इति न मन्तव्यम्। "पारिप्लवमाचक्षीते" त्युक्त्वा "मनुर्वैवस्वतो राजे" त्यादिना कासाञ्चिद्विशेषितत्वात्।

**तथा चैकवाक्यतोपबन्धात्** इति-

एवं सति "अन्यासां द्रष्टव्यः" विध्येकवाक्यतयोपवन्धात् संम्बन्धात् ता विद्यार्थाः इति पारिप्लवाधिनिरूपणम्।

**तृतीयोऽध्यायस्य चतुर्थपादे अग्नीन्धनाद्यधिकरणम्-**

अस्मिनधिकरणे एकमेव सूत्रमस्ति-

**अतएव चाग्नीन्धनाद्यनपेक्षा** इति-

"ब्रह्मनिष्ठोऽमृतत्वमेति" इत्यादिश्रुतेरूद्ध्र्वरेतःसु अग्नीन्धनाधनपेक्षा विद्याऽस्ति इति निरूपणम्।

**तृतीयोऽध्यायस्य चतुर्थपादे सर्वापेक्षाधिकरणम्-**

**सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्** इति-

"तमेतमात्मानम् वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन"141 इत्यादिश्रुतेर्गमनेऽश्ववद्विद्या स्वोत्पत्तौ साधनभूतानि सर्वाणि कर्माण्यपेक्षते इति प्रतिपादितम्।

**तृतीयोऽध्यायस्य चतुर्थपादे शमदमाद्यधिकरणम्-**

---

141 - वृहदा० ४.४.२२ ॥

**शमदमाद्युपेत: स्यात्तथाऽपि तु तद्विधेस्तदङ्गतया तेषामवश्यानुष्ठेयत्वात्** इति-

ब्रह्मजिज्ञासुर्विद्याङ्गभूतस्वाश्रमकर्मणा विद्यानिष्पत्तिसम्भवेऽपि शमदमाद्युपेत: स्यात्। "तस्मादेवंविच्छान्तोदान्त उपरतस्तितिक्षु: समाहितो भूत्वाऽत्मन्येवाऽत्मानं पश्येदि" ति विद्याङ्गतया शमादिविधेस्तेषामवश्यानुष्ठेयत्वात इति प्रतिपादितम्।

**तृतीयोऽध्यायस्य चतुर्थपादे सर्वान्नानुमत्यधिकरणम्-**

अस्मिनधिकरणे चत्वारिसूत्राणि सन्ति-

- सर्वान्ननुमतिश्च प्राणात्यये तद्दर्शनात्
- अबाधाच्च
- अपि च स्मर्यते
- शब्दश्चातोऽकामकारे

**सर्वान्ननुमतिश्च प्राणात्यये तद्दर्शनात्** इति-

न ह वा एवं विदि किञ्चनानन्नं भवती ति सर्वान्नासानं प्राणात्ययापत्तावेव प्राणात्यये चाक्रायणो ह्रीभ्योच्छिष्टं भक्षणं कृतवान्। तस्य श्रुतौ दर्शनात्

**अबाधाच्च** इति-

आहारशुद्धौ सत्त्वशुद्धिरि त्यस्याबाधाच्च।

**अपि च स्मर्यते** इति-

जीवितात्ययमापन्नो योऽन्नमत्ति यतस्तत:। लिप्यते न स पापेन पद्मपत्रमिवाम्भसे ति स्मर्यते च।

**शब्दाश्चातोऽकामकारे** इति-

अतएव तस्माद्ब्राह्मण: सुरां न पिबोदि ति शब्दो यथेष्टाचारो निवृत्तौ वर्त्तते इति प्राणोपासकस्यापि भक्ष्याभक्ष्यनियमाधीनता निरूपणम्।

## तृतीयोऽध्यायस्य चतुर्थपादे विहितत्वाधिकरणम्-

अस्मिनधिकरणे चत्वारिसूत्राणि सन्ति-

- विहितत्वाच्चाश्रमकर्मापि
- सहकारित्वेन च
- सर्वथापि त एवोभयलिङ्गात्
- अनभिभवं च दर्शयति

**विहितत्वाचाश्रमकर्मापि** इति-

यद्विद्याङ्गं यज्ञादि तद्वदमुमुक्षुणा चाश्रमकर्मत्वेनाप्यनुष्ठेयं "यावज्जीवमग्निहोत्रं जुहोति"[142] ति विहितत्वात्।

**सहकारित्वेन च** इति-

विद्यासहकारित्वेनापि "विविदिषन्ति यज्ञेने" इत्यादिना याज्ञादेर्विहितत्वान्मुमुक्षूणामप्यनुष्ठेयं संयोगपृथक्त्वेनोभयार्थत्वसम्भवात्।

**सर्वथापि त एवोभयलिङ्गात्** इति-

उभयार्थतया ते एव यज्ञादयो बोध्या:। उभयत्रैकरूपकर्मप्रत्यभिज्ञानात्।

**अनभिभवं च दर्शयति** इति-

---

[142] - पस्त० ३.१४.८ ॥

"धर्मेण पापमपनुदती" ति श्रुतिप्रसिद्धैर्यज्ञादिभिरेव विद्याभिभवहेतुभूतपापनयनेन विद्यायाः अनभिभवं दर्शयति इति प्रतिपादितम्।

## तृतीयोऽध्यायस्य चतुर्थपादे विधुराधिकरणम्-

अस्मिनधिकरणे चत्वारि सूत्राणि सन्ति-

- अन्तरा चापि तु तद्दृष्टेः
- अपि च स्मर्यते
- विशेषानुग्रहश्च
- अतस्त्वितरज्ज्यायो लिङ्गाच्च

**अन्तरा चापि तु तद्दृष्टेः** इति-

आश्रममन्तरा वर्त्तमानानामपि विद्याधिकारोऽस्ति। रैक्वादेर्विद्यानिष्ठत्वस्य दर्शनात्।

**अपि च स्मर्यते** इति-

जप्येनैव तु संसिध्येद्ब्राह्मणो नात्र संशयः। कुर्यादन्यन्न वा कुर्यान्मैत्रो ब्राह्मण उच्यते इति तेषामपि जपादीनां विद्यानुग्रहः स्मर्यते।

**विशेषानुग्रहश्च** इति-

जन्मान्तरीयेणापि साधनविशेषेण विद्यानुग्रहः स्मर्यते च "अनेकजन्मसंसिद्धस्ततो याति परां गतिमि"[143] ति।

**अतस्त्वितरज्ज्यायो लिङ्गाच्च** इति-

---

[143] - गीता ६.४९ ॥

अन्तरालवर्त्तित्वादाश्रमवर्त्तित्वं ज्याय: अनाश्रमी न तिष्ठेते तिलिङ्गाच्च इति अनाश्रमिणामपि ब्रह्मविद्याधिकारनिरूपणाधिकरणम्।

## तृतीयोऽध्यायस्य चतुर्थपादे तद्भूताधिकरणम्-

अस्मिनधिकरणे चत्वारि सूत्राणि सन्ति-

- तद्भूतस्य तु नातद्भावो जैमिनेरपि नियमात् तद्रूपाभावेभ्य:
- न चाधिकारिकमपि पतनानुमानात् तदयोगात्
- उपपूर्वमपि त्वेके भावमशनवत् तदुक्तम्
- बहिस्तूभयथापि स्मृतेराचाराच्च

**तद्भूतस्य तु नातद्भावो जैमिनेरपि नियमात् तद्रूपाभावेभ्य:** इति-

प्राप्तो ऊर्ध्वरितोभावस्याभावस्तु नोपपद्यते, इति जैमिनेरपि सम्मतं वचनाभावान्निमित्ताभावाच्छिष्टाचाराभावाच्च्।

**न चाधिकारिकमपि पतनानुमानात् तदयोगात्** इति-

अधिकारलक्षणे निर्णीतं प्रायश्चित्तं नैष्ठिकस्य न सम्भवति, तस्य तदयोगात्। "आरूढो नैष्ठिकं धर्मं यस्तु प्रच्यवते द्विज:। प्रायश्चितं न पश्यामि येन शुध्येत् स आत्महे"[144] ति स्मृते:।

**उपपूर्वमपि त्वेके भावमशनवत् तदुक्तम्** इति-

एक तु नैष्ठिकस्य ब्रह्मचर्यच्च्यवनमुपपातकमतस्तत्र प्रायश्चित्तं मन्यते। उपर्वाणवत्तस्य ब्रह्मचारित्वाविशेषात् मध्वशनादिवत्तदुक्तम् "उत्तररेषामविरोधी" ति।

---

[144] - स्मृते:

**बहिस्तूभयथापि स्मृतेराचाराच्च** इति-

नैष्ठिकादीनां स्वाश्रमप्रच्युतेर्महापातकत्वमुपपातकत्वं वाऽस्तूभयथापि ते ब्रह्मविद्याधिकाराद्बहिर्भूताः "प्रायश्चित्तं न पश्यामि येन शुध्येत् स आत्महे" ति स्मृतेः शिष्टाचाराच्च इति नैष्ठिकस्य ब्रह्मचर्यपरित्यागे निरूपणम्।

## तृतीयोऽध्यायस्य चतुर्थपादे स्वाम्यधिकरणम् -

अस्मिनधिकरणे द्वौ सूत्रौ स्तः यत् निम्नः-

- स्वामिनः फलश्रुतेरित्यात्रेयः
- आर्त्विज्यमित्यौडुलोमिस्तस्मै हि परिक्रीयते

**स्वामिनः फलश्रुतेरित्यात्रेयः** इति-

कर्माङ्गाश्रितमुपासनं यजमानकर्तृकमित्यात्रेयः। यदेव विद्यये ति फलश्रुतेः।

**आर्त्विज्यमित्यौडुलोमिस्तस्मै हि परिक्रीयते** इति-

कर्माङ्गाश्रितमुपासनमृत्वि क कर्तृकं त स्मै कर्मणे क्रीतत्वात् फलस्य यजमानाश्रयम्।

## तृतीयोऽध्यायस्य चतुर्थपादे सहकार्य्यन्तरविद्याधिकरणम्-

अस्मिनधिकरणे त्रीणि सूत्राणि सन्ति

- सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत्
- कृत्स्नभावात् तु गृहिणोपसंहारः
- मौनवदितरेषामप्युपदेशात्

**सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत्** इति-

"तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेद्बाल्यं च पाण्डित्यञ्च निर्विद्याथ मुनिरि" त्यत्र मननशीले मौनपदप्रवृत्तिसम्भवेऽपि पक्षेण प्रकृतमननशीले प्रयोगदर्शनात् पाण्डित्यबाल्ययोरपेक्षया तृतीयं सहकार्यन्तरं मौनं विधीयते, यज्ञादिवत् शमादिवच्च।

**कृत्स्नभावात् तु गृहिणोपसंहारः** इति-

"स खल्वेव वर्त्तयन् यावदायुष ब्रह्मलोकमभिसम्पद्यते न च पुनरावर्त्तते" इति गृहिणोपसंहारः सर्वाश्रमधर्मसद्भावात् सर्वधर्मप्रदर्शनार्थः।

**मौनवदितरेषामप्युपदेशात्** इति-

तथैव तस्मिन् वाक्येऽपि मौनोपदेशः सर्वधर्माप्रदर्शनार्थः। मौनोपदेशवत् "त्रयो धर्मस्कन्धा" इत्यादिना सर्वाश्रमधर्मोपदेशात् इति मौनव्रतस्य निरूपणम्।

## तृतीयोऽध्यायस्य चतुर्थपादे अनाविष्काराधिकरणम्-

अस्मिनधिकरणे एकमेव सूत्रमस्ति।

**अनाविष्कुर्वन्नन्वयात्** इति-

पाण्डित्य स्वमाहात्म्याद्यनाविष्कुर्वन् बाल्येन निरहङ्काभावेन् वर्त्तेत। तस्यैवान्वयसम्भवात् इति बाल्येन शब्दार्थनिरूपणम्।

## तृतीयोऽध्यायस्य चतुर्थपादे ऐहिकाधिकरणम्-

अस्मिनधिकरणे एकमेव सूत्रमस्ति

**ऐहिकमप्रस्तुते प्रतिबन्धे तद्दर्शनात्** इति-

असति प्रतिबन्धे ऐहिकं विद्याजन्म, तस्मिन् सत्यामुष्मिकं "मृत्युप्रोक्तां नचिकेतोऽथ लब्ध्वा विद्यामि" त्यादौ तद्दर्शनात् इति निरूपणम्।

## तृतीयोऽध्यायस्य चतुर्थपादे मुक्तिफलाधिकरणम्-

अस्मिनधिकरणे एकमेव सूत्रमस्ति

**मुक्ति फलानियमस्तदवस्थावधृतेस्तदवस्थावधृतेः** इति-

तथा मुक्तिफलानियमः "तस्य तावदेव चिरम्" इति वचनात् इति विद्यायाः तत्फलस्य निरूपणम्। तदोत्थं तृतीयाध्याये मोक्षसाधनानां विचारः कृतः। अतः अयमध्यायः साधनाध्यायः इति उच्यते।

अत्र शोधप्रबन्धे वेदान्तकौस्तुभप्रभारीत्या ब्रह्मोपासनायामोक्षसाधनत्वं स्वाभाविकभेदाभेदवादः सिद्धान्तमाश्रित्य यथानिरूपितं तथा विवेचितम्।

**तृतीयाध्यायः समाप्तः**

# चतुर्थोऽध्याय:

## वेदान्तकौस्तुभप्रभाया: चतुर्थोऽध्यायस्य समीक्षात्मक:

### ❖ प्रथमपादस्य वेदान्तकौस्तुभप्रभाया: समीक्षात्मक: प्रथमखण्ड:-

तृतीयेऽध्याये साधनविद्याविचारो कृत:। सम्प्रति चतुर्थेऽस्मिन्नध्याये विद्याया: फलचिन्ता क्रियते। अत: कौस्तुभप्रभायां-

मोक्षोपायाभियुक्तानां भजतां त्वत्पदाम्बुजम्।

तनोति परमं श्रेयो यस्तं कृष्णमहं भजे॥१॥

संगृहीतानि मोक्षस्य साधनानि तृतीयके।

चरमेऽस्मिन् फलं प्राह भगवान् बादरायण:॥२॥

इति मंगलाचरणेन चतुर्थ: अध्याय: आरब्ध:। अस्मिनध्याये चत्वारि पादानि सन्ति। प्रथमे पादे एकादशाधिकरणानि सन्ति तानि च।

- **आवृत्यधिकरणम्**
- **आत्मत्वोपासनाधिकरणम्**
- **प्रतीकाधिकरणम्**
- **आदित्यादिमत्यधिकरणम्**
- **आसीनाधिकरणम्**
- **अप्रयाणाधिकरणम्**
- **तदधिगमाधिकरणम्**
- **इतराधिकरणम्**
- **अनारब्धकार्याधिकरणम्**

- अग्निहोत्राधिकरणम्
- इतरक्षपणाधिकरणम्

**चतुर्थोऽध्यायस्य प्रथमपादे आवृत्यधिकरणम्-**

अस्मिनधिकरणे द्वे सूत्रे स्त:

- आवृत्तिरसकृदुपदेशात्
- लिङ्गाच्च।

**आवृत्तिरसकृदुपदेशात्** इति-

असकृत् साधनावृत्ति: कर्त्तव्या "श्रोतव्यो मन्तव्यो निदिध्यासितव्य:" इत्यादिब्रह्मदर्शनायोपदेशात्।

**लिङ्गाच्च** इति-

"अभ्यासयोगेन ततो मामिच्छाप्तुं धनञ्जय" इत्यादिस्मृतेश्च इति साधनवृत्तिनिरूपणम्।

**चतुर्थोऽध्यायस्य प्रथमपादे आत्मत्वोपासनाधिकरणम्-**

अस्मिनधिकरणे एकमेव सूत्रमस्ति-

**आत्मेति तूपगच्छन्ति ग्राहयन्ति च** इति-

"एष मे आत्मे" ति पूर्वे उपगच्छन्ति। "एष ते आत्मे" ति शिष्यानुपदिषन्ति। अतो मुमुक्षुणा परमपुरुष: स्वस्यात्मत्वेन ध्येय: इति मुमुक्षुणा निरूपणम्।

## चतुर्थोऽध्यायस्य प्रथमपादे प्रतीकाधिकरणम्-

अस्मिनधिकरणे द्वे सूत्रे स्तः

- न प्रतीकेन हि सः
- ब्रह्मदृष्टिरुत्कर्षात्

**न प्रतीकेन हि सः** इति-

प्रतीके त्वात्मानुसन्धानं न कार्यं न स उपासितुरात्मा।

**ब्रह्मदृष्टिरुत्कर्षात्** इति-

मन आदौ ब्रह्मदृष्टिर्युक्तैव, न तु ब्रह्मणि मनादिदृष्टिर्ब्रह्मण उत्कर्षात् इति प्रतीके प्रतिपादितम्।

## चतुर्थोऽध्यायस्य प्रथमपादे आदित्यादिमत्यधिकरणम्-

अस्मिनधिकरणे एकमेव सूत्रमस्ति-

**आदित्यादिमतययश्चाङ्ग उपपत्तेः** इति-

"य एवासौ तपति तमुद्गीथमुपासीते" त्याद्युपासनेषूद्गीथादिष्वादित्यादिमतयः कर्त्तव्याः आदित्यादेरुत्कर्षोपपत्तेः इति उद्गीथादिषु निरूपणम्।

## चतुर्थोऽध्यायस्य प्रथमपादे आसीनाधिकरणम्-

अस्मिनधिकरणे पञ्चसूत्राणि सन्ति-

- आसीनः सम्भवात्
- ध्यानाच्च

- अचलत्वं चापेक्ष्य:
- स्मरन्ति च
- यत्रैकाग्रता तत्राविशेषात्

**आसीन: सम्भवात्** इति-

आसीन एवोपासनमनुतिष्ठेत् तस्यैव तत्सम्भवात्।

**ध्यानाच्च** इति-

उपासनस्य ध्यानरूपत्वादासीन एव तदनुतिष्ठेत्।

**अचलत्वं चापेक्ष्य:** इति-

"ध्यायतीव पृथिवी" त्यत्राचलत्वमपेक्ष्य ध्यायतिप्रयोगो वर्तते। अत आसीन एवोपासनमनुतिष्ठेत्।

**स्मरन्ति च** इति-

"शुचौ देशे प्रतिष्ठाप्य" इत्यादि स्मरन्ति च।

**यत्रैकाग्रता तत्राविशेषात्** इति-

यत्र चित्तैकाग्रयं तत्रोपासीत् तदतिरिक्तदेशादिविशेषाश्रवणात्।

**चतुर्थोऽध्यायस्य प्रथमपादे अप्रयाणाधिकरणम्-**

अस्मिनधिकरणे एकमेव सूत्रमस्ति-

**आप्रयाणात्तत्रापि हि दृष्टम्** इति-

उपासनमाप्रयाणात् कार्यम्। यतस्तत्रापि “स खल्वेवं वर्त्तयन् यावदायुषमि” त्यादौ तद्दृष्टम् इति उपासनविधिनिरूपणम्।

**चतुर्थोऽध्यायस्य प्रथमपादे तदधिगमाधिकरणम्-**

अस्मिनधिकरणे एकमेव सूत्रमस्ति-

**तदधिगमे उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात्** इति-

विदुष उत्तरपूर्वयोरघयोरश्लेषविनाशौ भवतः। कुतः? “एवं विदि पापं कर्म न श्लिष्यते” “अस्य सर्वे पाप्मानः प्रदुयन्ते” इति व्यपदेशात्।

**चतुर्थोऽध्यायस्य प्रथमपादे इतराधिकरणम्-**

अस्मिनधिकरणे एकमेव सूत्रमस्ति-

**इतरस्याप्येवमसंश्लेषः पाते तु** इति-

पुण्यस्य काम्यकर्मणोऽपि अघवन्मुक्तिविरोधित्वादुत्तरस्याश्लेषः पूर्वस्य विनाषः एव। उत्तरपूर्वयोश्लेषविनाशान्तरं देह पाते सति मुक्तिरेव।

**चतुर्थोऽध्यायस्य प्रथमपादे अनारब्धकार्याधिकरणम्-**

अस्मिनधिकरणे एकमेव सूत्रमस्ति-

**अनारब्धकार्ये एव तु पूर्वे तदवधेः** इति-

विद्याप्राप्तौ पूर्वे पापपुण्येऽप्रवृत्तफले एव क्षीयेते। कुतः? “तस्य तावदेव चिरं यावन्नं विमोक्ष्ये अथ सम्पत्स्ये” इति शरीरपातावधिश्रवणात् इति विद्यालाभे प्रतिपादितम्।

## चतुर्थोऽध्यायस्य प्रथमपादे अग्निहोत्राधिकरणम्-

अस्मिनधिकरणे त्रीणि सूत्राणि सन्ति-

- अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात्
- अतोऽन्यापि ह्येकेषामुभयोः
- यदेव विद्ययेति हि

**अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात्** इति-

विद्ययाऽग्निहोत्रदानतपादीनां स्वाश्रमकर्मणां निवृत्तिशङ्का नास्ति, विद्यापोषकत्वादनुष्ठेयान्येव। यज्ञादिश्रुतौ तेषां विद्योत्पादकत्वं दर्शनात् इति अग्निहोत्राद्याश्रमकर्मणा निरूपणम्।

**अतोऽन्यापि ह्येकेषामुभयोः** इति-

अस्मात् प्राप्तविषयात् कर्मणो विद्योत्पादकादिरूपादन्याप्लब्धविषयाकृत्याऽस्ति। तद्विषयमेकेषां "सुहृदः साधुकृत्यां द्विषन्तः पापकृत्यामि" त्युभयोः पुण्यपापयोर्विभागवचनम् इति अलब्धविषयकर्मणमन्यैर्भोग्यत्वनिरूपणम्।

**यदेव विद्ययेति हि** इति-

कर्मणः प्रबलत्वदुर्बलत्वसूचनार्थमिदमुच्यते यदेव विद्यया इति हि इति विद्यया कृतकर्मणः निरूपणम्।

## चतुर्थोऽध्यायस्य प्रथमपादे इतरक्षपणाधिकरणम्-

अस्मिनधिकरणे एकमेव सूत्रमस्ति-

**भोगेन त्वितरे क्षपयित्वाऽथ सम्पद्यते** इति-

विद्वानारब्धकार्ये तु सुकृतदुष्कृते भोगेन क्षपयित्वा ब्रह्म सम्पद्यते इति प्रवृत्तफलकर्मणां भोगेन निरूपणम्। तदेवं प्रथमेपादे ब्रह्मदर्शनाय विधीयमानानां श्रमणादीनां आवृत्तिः कार्या इति प्रतिपादितम्। ब्रह्मविद्यया सञ्चितकर्मणः नाशः वर्तमानकर्मणः अश्लेषः प्रारब्धकर्मणस्तु भोगेनैव नाशः इति।

## ❖ द्वितीयपादस्य वेदान्तकौस्तुभप्रभाया: समीक्षात्मक: द्वितीयखण्ड:

सम्प्रति विद्वद्गतिप्रकार: चिन्तयते। अस्मिन् पादे एकादश अधिकरणानि सन्ति-

- **वागधिकरणम्**
- **मनोधिकरणम्**
- **अध्यक्षाधिकरण्**
- **भूताधिकरणम्**
- **स्मृत्युपक्रमाधिकरणम्**
- **सम्परायाधिकरणम्**
- **अविभागाधिकरणम्**
- **तदेकोऽधिकरणम्**
- **रश्म्यनुसार्यधिकरणम्**
- **निशाधिकरणम्**
- **दक्षिणायनाधिकरणम्**

### चतुर्थोऽध्यायस्य द्वितीयपादे वागधिकरणम्-

अस्मिनधिकरणे द्वे सूत्रे स्त:

- वाङ्मनसि दर्शनात् शब्दाच्च
- अतएव सर्वाण्यनु

**वाङ्मनसि दर्शनात् शब्दाच्च** इति-

"वाङ्मनसि सम्पाद्यते" इति वागिन्द्रियस्य मनसि संयोगरूपा सम्पतिरुच्यते, वागिन्द्रिये उपरतेऽपि, मन: प्रवृत्तिदर्शनात्, "वाङ्मनसि सम्पाद्यते" इति शब्दाच्च।

**अतएव सर्वाण्यनु** इति-

वाचमनु सर्वाण्यपीन्द्रियाणि मनसि सम्पाद्यन्ते, तथा दर्शनात् "इन्द्रियैर्मनसि सम्पाद्यमानैरि" ति शब्दाच्च।

## चतुर्थोऽध्यायस्य द्वितीयपादे मनोधिकरणम्-

**तन्मनः प्राण उत्तरात्** इति-

तच्च प्राणेन संयुज्यते। "मनः प्राणे" इत्युत्तराच्छब्दात्।

## चतुर्थोऽध्यायस्य द्वितीयपादे अध्यक्षाधिकरण्-

अस्मिनधिकरणे एकमेव सूत्रमस्ति।

**सोऽध्यक्षे तदुपागमादिभ्यः** इति-

प्राणो जीवेन संयुज्यते। कुतः "एवमेवेममात्मानमन्त काले सर्वे प्राणा अभिसमायन्ति" "तमुत्क्रान्तं प्राणोऽनुत्क्रमति" "कस्मिन् वा प्रतिष्ठते प्रतिष्ठितः स्यामि" ति तदुपागमादिबोधकवाक्येभ्यः जीवसंयुक्तस्य प्राणस्य तेजसि सम्पत्तिरिति फलितोऽर्थः।

## चतुर्थोऽध्यायस्य द्वितीयपादे भूताधिकरणम्-

अस्मिनधिकरणे द्वे सूत्रे स्तः।

- भूतेषु तच्छ्रुतेः
- नैकस्मिन् दर्शयतो हि

**भूतेषु तच्छ्रुतेः** इति-

सा च जीवसंयुक्तस्य तस्य तेज: सहितेषु भूतेषु भवति "पृथिवीमय: आपोमयो वायुमय: आकाशमयस्यतेजोमय:" इति सञ्चरतो जीवस्य सर्वभूतमयत्वश्रवणात्।

**नैकस्मिन् दर्शयतो हि** इति-

एकस्मिन्तु सा न सम्भवति "तासां त्रिवृत्तमेकैकां करवाणि" नानावीर्या: पृथग्भूतास्ततस्ते संहतिंविना नाशक्नुवन प्रजा: स्रष्टुमसमागम्य कृत्स्नश:" इति श्रुतिस्मृती एकैकस्य कार्याक्षमत्वं दर्शयत:।

**चतुर्थोऽध्यायस्य द्वितीयपादे स्मृत्युपक्रमाधिकरणम्-**

अस्मिनधिकरणे सप्तसूत्राणि सन्ति तानि च-

- समाना चासृत्युपक्रमादमृतत्वञ्चनुपोष्य
- तदापीते: संसारव्यपदेशात्
- सूक्ष्मं प्रमाणतश्च तथोपलब्धे:
- नोपमर्द्देनात:
- अस्यैव चोपपत्तेरुष्मा
- प्रतिषेधादिति चेन्न शरीरात् स्पष्टो ह्येकेषाम्
- स्मर्यते च

**समाना चासृत्युपक्रमादमृतत्वञ्चनुपोष्य** इति-

"शतं चैका च हृदयस्य नाड्यस्तासां मूर्द्धानमभिनि:सृतैका तयोद्ध्र्वमापन्नमृतत्वमेति विश्वगण्या उत्क्रमणे भवन्ती" ति नाडीविशेषेण विदुषोऽप्युत्क्रम्य गति: श्रूयते। एवं सति विदुषो नाडीप्रवेशलक्षणगत्युपक्रमात् प्रागुत्क्रान्ति: समानैव। यत्तु "यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिता: अथ

मर्त्योऽमृतो भवती" ति विदुष इहैवामृतत्वं श्रूयते। तदेन्द्रियादिसम्बन्धमदग्ध्वैवोत्तरपूर्वाघाश्लेषविनाशलक्षणमुपपद्यते।

**तदापीतेः संसारव्यपदेशात्** इति-

तदमृतत्वं देहसम्बन्धमदग्ध्वैव बोध्यम्। कुतः? "तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्ये" इति आविमुक्तेः संसारव्यपदेशात्।

**सूक्ष्मं प्रमाणतश्च तथोपलब्धेः** इति-

सूक्ष्मं शरीरमनुवर्त्तते "विदुषस्तं प्रतिब्रूयात् सत्यं ब्रूयात्" इति प्रमाणतस्तद्भावोपलब्धेः।

**नोपमर्द्देनातः** इति-

अतः "अथ मर्त्योऽमृतो भवति" इति न देहसम्बन्धोपमर्द्देनामृतत्वं वदति।

**अस्यैव चोपपत्तेरुष्मा** इति-

स्थूलदेहे सूक्ष्मदेहस्यैव धर्मभूतः उष्मोपलभ्यते। तस्मिन्नसति तदनुपलब्धे रित्युपपत्तेः।

**प्रतिषेधादिति चेन्न शरीरात् स्पष्टो ह्येकेषाम्** इति-

"अथाकामयमानो योऽकामो निष्कामः आप्तकामः आत्मकामो न तस्य प्राणा उत्क्रामन्ति ब्रह्मैव सन् ब्रह्माप्येती" ति विप्रतिषेधाद्विदुषः प्रकृताच्छारीरा "तस्मात् प्राणा उत्क्रामन्ती" ति स्पष्टं एकेषां पाठे। तस्मादेव तेषामुत्क्रान्तिप्रतिषेधः श्रूयते।

**स्मर्यते च** इति-

"सविरुद्धस्तु तेनात्मा सर्वेष्वायतनेषु वै। जगाम भित्त्वा मूर्द्धानं दिवमभ्युत्पपात ह" इति विदुष उत्क्रान्ति: स्मर्यते।

**चतुर्थोऽध्यायस्य द्वितीयपादे सम्परायाधिकरणम् -**

अस्मिनधिकरणे एकमेव सूत्रमस्ति-

**तानि परे तथा ह्याह** इति-

तेज: प्रभृतिभूतसूक्ष्माणि परस्मिन् सम्पद्यन्ते। "तेज: परस्यां देवतायाम्" इत्याह श्रुति:।

**चतुर्थोऽध्यायस्य द्वितीयपादे अविभागाधिकरणम्-**

अस्मिनधिकरणे एकमेव सूत्रमस्ति-

**अविभागो वचनात्** इति-

तेषां वागादिभूतसूक्ष्माणां परेऽविभागस्तादात्म्यापत्ति: "भिद्यते चासां नामरूपे पुरुष इत्येवं प्रोच्यते" इति वचनात्।

**चतुर्थोऽध्यायस्य द्वितीयपादे तदेकोऽधिकरणम्-**

अस्मिनधिकरणे एकमेव सूत्रमस्ति-

**तदोकोऽग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात्तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीत: शताधिकया** इति-

"शतं चैका च हृदयस्य नाड्य: तासां मूर्द्धानमभिनि:सृतैका तयोर्ध्वमायन्नमृतत्वमेति" इति श्रुत्युक्ता नाडी वर्त्तते। विद्यासामर्थ्यात्तच्छेषगत्यनुस्मृतियोगाच्च प्रसन्नेन वेद्येनानुगृहीतो यदा भवति

ततस्तस्योको हृदयमग्रज्वलनं भवति तदा परमेश्वरप्रकाशितद्वारस्तां विदित्वा विद्वान् तया निष्क्रामति।

**चतुर्थोऽध्यायस्य द्वितीयपादे रश्म्यनुसार्यधिकरणम्-**

अस्मिनधिकरणे एकमेव सूत्रमस्ति।

**रश्म्यनुसारी** इति-

विद्वान्मूर्द्धन्यया नाड्या निष्क्रम्य सूर्यरश्म्यनुसार्येवोर्ध्वं गच्छति "तैरेव रश्मिभिरि" त्यवधारणात्।

**चतुर्थोऽध्यायस्य द्वितीयपादे निशाधिकरणम्-**

अस्मिनधिकरणे एकमेव सूत्रमस्ति।

**निशि नेति चेन्न सम्बन्धस्य यावद्देहभावित्वाद्दर्शयति च** इति-

निशि मृतस्य विदुषो न परप्राप्तिरिति न वाच्यम् यावद्देहभाविकर्मसम्बन्धापगमात्तस्य तत्प्राप्तिः स्यादेव "तस्य तावदेव चिरं यावन्न विमोक्षेऽथ सम्पत्स्ये" इति श्रुतेः।

**चतुर्थोऽध्यायस्य द्वितीयपादे दक्षिणायनाधिकरणम्-**

अस्मिनधिकरणे एकमेव द्वे सूत्रे स्तः

- **अतश्चायनेऽपि दक्षिणे**
- **योगिनः प्रति स्मर्यते, स्मार्ते चेते**

**अतश्चायनेऽपि दक्षिणे** इति-

उक्तहेतोर्दक्षिणायनेऽपि मृतस्य विदुषो ब्रह्मप्राप्ति: इतिप्रतिपादितम्।

**योगिन: प्रति स्मर्यते, स्मार्ते चेते** इति-

"यत्र काले त्वनावृत्तिरि" त्यादिना च योगिन: प्रति स्मृतिद्वयं स्मर्यते। ते चैते स्मरणार्हे अतो न कालविशेषनियम: निरूपणम्।

## ❖ तृतीयपादस्य वेदान्तकौस्तुभप्रभाया: समीक्षात्मक: तृतीयखण्ड:

अस्मिन् पादे पञ्चाधिकरणानि सन्ति।

- **अर्चिराद्यधिकरणम्**
- **वाय्वाधिकरणम्**
- **वरुणाधिकरणम्**
- **अतिवाहिकाधिकरणम्**
- **कार्याधिकरणम्**

### चतुर्थाध्यायस्य तृतीयपाद: अर्चिराद्यधिकरणम्-

अस्मिनधिकरणे एकमेव सूत्रमस्ति

**अर्च्चिरादिना तत्प्रथिते:** इति-

एक एव मार्गोऽर्च्चिरादिर्ज्ञेयोऽतस्तेनैव विद्वांसो गच्छन्ति "अर्च्चिषमेवाभिसम्भवन्ति। अर्च्चिषोऽह रह्न आपूर्यमाणपक्षमा पूर्यमाणपक्षाद्यान् षदङ्डेति मासां स्तान्मासेभ्य: संवत्सरं संवत्सरादादित्यमा दित्याच्चन्द्रमसं चन्द्रमसो विद्युतं तत्पुरुषोऽमानव: स एतान् ब्रह्म गमयति एष देवपथो ब्रह्मपथ: एतेन प्रतिपद्यमाना इमं मानवमावर्त्तं नावर्त्तन्ते" इति छान्दोग्ये। तेऽर्च्चिषमभिसम्भवन्ति, अर्च्चिषोऽहरह्न आपूर्यमाणपक्षमा पूर्यमाणपक्षाद्यान् षडुदङ्ङादित्यमेति मासेभ्य: देवलोकं देवलोकादादित्यमादित्याद्वैद्युतं तान् वैद्युतात् पुरुषोऽमानव एत्य ब्रह्मलोकान् गमयति" इति बृहदारण्यके अन्यत्रापि तथैव प्रसिद्धे: इति अर्च्चिराद्यधिकरणम्।

## चतुर्थाध्यायस्य तृतीयपाद: वाय्वाधिकरणम्-

अस्मिनधिकरणे एकमेव सूत्रमस्ति

**वायुमब्दादविशेषविशेषाभ्याम्** इति-

छान्दोग्यश्रुतिपठितात् संवत्सरादूर्द्धवमादित्यात् पूर्व "मग्निलोकमागच्छति स वायुलोकमि" ति कौषीतकी श्रुत्युक्तं वायुमभिसम्भवति अविशेषविशेषाभ्याम् अग्निलोकमागच्छति स वायुलोकमि त्यत्र वायुरविशेषेणोपदिष्टत्वात् "तस्मै स तत्र विजिहीते यथा रथचक्रस्य खं तेन स ऊर्ध्वमाक्रमते स आदित्यमागच्छती" त्यत्र विशेषावगमाच्च इति वाय्वधिकरणम्।

## चतुर्थाध्यायस्य तृतीयपादे वरुणाधिकरणम्-

अस्मिनधिकरणे एकमेव सूत्रमस्ति

**तडितोऽधिवरुण: सम्बन्धात्** इति-

"स एतं देवयानं पन्थागनमापद्याग्निलोकमागच्छति स वायु लोकं स वरुणलोकं स इन्द्रलोकं स प्रजापतिलोकं स ब्रह्मलोकमि" ति कौषीतकीश्रुत्युक्तो "वरुणश्चन्द्रमसो विद्युतमि" ति छान्दोग्यश्रुत्युक्तविद्युत उपरि तेजो विद्युद्वरुणसम्बन्धादिन्द्रप्रजापती च तदग्रे योज्या इति वरुणाधिकरणम्।

## चतुर्थाध्यायस्य तृतीयपादे अतिवाहिकाधिकरणम्-

अस्मिनधिकरणे द्वे सूत्रे स्त:

- आतिवाहिकास्तल्लिङ्गात्
- वैद्युतेनेव ततस्तच्छ्रुते:

**आतिवाहिकास्तल्लिङ्गात्** इति-

अर्चिरआदयो गन्तृणां गमयितार: "स एतान् ब्रह्म गमयती" त्यमानवस्य गमयितृत्वश्रवणात् पूर्वेषामपि गमयितृत्वं गम्यते।

**वैद्युतेनेव ततस्तच्छ्रुते:** इति-

विद्युत उपरिष्टादमानवेनैव विद्वान्नीयते वरुणादयस्तु साहित्येनोपकारिका: इति अर्च्चिरादीनां निरूपणम्।

**चतुर्थाध्यायस्य तृतीयपादे कार्याधिकरणम्-**

अस्मिनधिकरणे दश सूत्राणि सन्ति तानि च-

- कार्यं बादरिरस्य गत्युपपत्तेः
- विशेषितत्वाच्च
- सामीप्यात् तु तद्व्यपदेश:
- कार्यात्यये तदध्यक्षेण सहात: परमभिधानात्
- स्मृतेश्च
- परं जैमिनिर्मुख्यत्वात्
- दर्शनाच्च
- न च कार्ये प्रतिपत्त्यभिसन्धि:
- अप्रतीकालम्बनान्नयतीति बादरायण उभयथा दोषात् तत्क्रतुश्च
- विशेषं च दर्शयति

**कार्यं बादरिरस्य गत्युपपत्ते:** इति-

अर्च्चिरादि गण: कार्यं ब्रह्म तदुपासकान्नयति कार्यस्य ब्रह्मण एव गत्युपपत्तेरिति वादरिर्मन्यते।

**विशेषितत्वाच्च** इति-

"तेषु ब्रह्मलोकेषु परा: परावन्तो वसन्ती" ति लोक शब्दबहुवचनाभ्यां विशेषितत्वाच्च।

**सामीप्यात् तु तद्व्यपदेश:** इति-

प्रथमजत्वेन ब्रह्मसामीप्यात्तु "ब्रह्म गमयती" ति व्यपदेश उपपद्यते।

**कार्यात्यये तदध्यक्षेण सहात: परमभिधानात्** इति-

कार्यब्रह्मलोकनाशे कार्यब्रह्मणा सह कार्यब्रह्मण: परं प्राप्नोति "ते ब्रह्मलोके तु परान्तकाले परामृतात् परिमुच्यन्ति सर्वे" इत्यभिधानात्।

**स्मृतेश्च** इति-

"ब्रह्मणा सह ते सर्वे सम्प्राप्ते प्रतिसंचरे। परस्यान्ते कृतात्मान: प्रविशन्ति परं पदमि" ति स्मृतेश्चोक्तार्थोऽवगम्यते।

**परं जैमिनिर्मुख्यत्वात्** इति-

"परं ब्रह्म नयति" "एतान् ब्रह्म गमयती" ति ब्रह्मशब्दस्य परस्मिन् मुख्यत्वात्।

**दर्शनाच्च** इति-

"परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते" इति परप्राप्यत्वदर्शनाच्च।

**न च कार्ये प्रतिपत्त्यभिसन्धि:** इति-

"प्रजापते: सभां वेश्म प्रपद्ये" इत्ययं प्राप्ते: सङ्कल्प: कार्यब्रह्मविषयको न किन्तु परमात्मविषयक: तस्यैवाधिकारात्।

**अप्रतीकालम्बनान्नयतीति बादरायण उभयथा दोषात् तत्क्रतुश्च** इति-

अर्च्चिरादिगण: प्रतीकालम्बनव्यतिरिक्तान्परब्रह्मोपासकान् ब्रह्मात्मकतयाऽक्षरस्वरूपोपासकांश्च परं ब्रह्म नयति। कुत:? उभयथा दोषात्। कार्योपासकान्नयतीत्यत्र "अस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसम्पद्ये" त्यादि श्रुतिव्याकोप: स्यात्। परोपासीनानेव नयतीति नियमे तु "तद् य इत्थं विदुर्ये चेमेऽरण्ये श्रद्धां तप इत्युपासते ते अर्च्चिषमभिसम्भवन्ती" ति श्रुतिव्याकोप: स्यात्। "तस्माद् यथाक्रतुरस्मिँल्लोके पुरुषो भवति तथेत: प्रेत्य भवती" त्यादि श्रुतेस्तत्क्रतुस्तथैव प्राप्नोतीति सिद्धान्तो भगवान् वादरायणो मन्यते।

**विशेषं च दर्शयति** इति-

"यावन्नाम्नोगतं तत्रास्य यथाकामचारो भवती" त्यादिका श्रुति: प्रतीकोपासकस्य गत्यनपेक्षं फलविशेषं च दर्शयति इति प्रतिपादितम्।

## ❖ चतुर्थपादस्य वेदान्तकौस्तुभप्रभायाः समीक्षात्मकः चतुर्थखण्डः

अस्मिन् पादे षट् अधिकरणानि सन्ति

- **सम्पद्याविर्भावाधिकरणम्**
- **अविभागेन दृष्टत्वाधिकरणम्**
- **ब्रह्माधिकरणम्**
- **सङ्कल्पाधिकरणम्**
- **अभावाधिकरणम्**
- **जगद्व्यापारवर्ज्जाधिकरणम्**

### चतुर्थोऽध्यायस्य चतुर्थपादस्य सम्पद्याविर्भावाधिकरणम्-

अस्मिनधिकरणे त्रीणि सूत्राणि सन्ति।

- सम्पद्याविर्भावः स्वेनशब्दात्
- मुक्तः प्रतिज्ञानात्
- आत्मा प्रकरणात्

**सम्पद्याविर्भावः स्वेनशब्दात्** इति-

जीवोऽर्च्चिरादिकेन मार्गेण परं सम्पद्य स्वाभाविकेन रूपेणाविर्भवतीति "परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यत" इति वाक्येन प्रतिपाद्यते, स्वेनेति शब्दात्।

**मुक्तः प्रतिज्ञानात्** इति-

बन्धाद्विमुक्त एवात्र स्वेन रूपेणाभिनिष्पद्यते इत्युच्यते। कुतः? "य आत्मा अपहतयाप्मे" त्युपक्रम्य "एवं त्वेव ते भूयोऽनुव्याखास्यामी" ति प्रतिज्ञानात्।

**आत्मा प्रकरणात्** इति-

आत्मैवाविर्भूतरूपस्तत्प्रकरणात् इति विदेहमुक्तस्य स्वरूपे प्रतिष्ठा निरूपणम्।

## चतुर्थोऽध्यायस्य चतुर्थपादस्य अविभागेन दृष्टत्वाधिकरणम्-

अस्मिनधिकरणे एकमेव सूत्रमस्ति।

**अविभागेन दृष्टत्वात्** इति-

मुक्तः परस्मादात्मानं भागाविरोधिना अविभागेनानुभवति। तत्वस्य तदानीमपरोक्षतो दृष्टत्वात् शास्त्रस्याप्येवं दृष्टत्वात् इति विदेहमुक्तस्य ब्रह्माभिन्नरूपेण स्थितिनिरूपणम्।

## चतुर्थोऽध्यायस्य चतुर्थपादस्य ब्रह्माधिकरणम्-

अस्मिनधिकरणे त्रीणि सूत्राणि सन्ति-

- ब्राह्मेण जैमिनिरूपन्यासादिभ्यः
- चिति तन्मात्रेण तदात्मकत्वादित्यौडुलोमिः
- एवमप्युपन्यासात् पूर्वभावादविरोधं वादरायणः

**ब्राह्मेण जैमिनिरूपन्यासादिभ्यः** इति-

अपहतपाप्मत्वादि ब्राह्मेण गुणेन युक्तः प्रत्यगात्माऽविर्भवतीति जैमिनिर्मन्यते। प्रजापतिवाक्ये दहरवाक्ये ब्रह्मसम्बन्धितया श्रुतानामपहतपाप्मत्वादीनां प्रत्यगात्मसम्बन्धितयाऽप्युपन्यासादिना जक्षणादिभ्यस्य।

**चिति तन्मात्रेण तदात्मकत्वादित्यौडुलोमिः** इति-

ब्रह्मणि चिद्रूपे उपसन्नः प्रत्यगात्मा चिन्मात्रेण रूपेणाविर्भवति। "प्रज्ञानघन एवे" ति तस्य तदात्मकत्वश्रवादित्यौडुलोमिर्मन्यते।

**एवमप्युपन्यासात् पूर्वभावादविरोधं वादरायणः** इति-

विज्ञानमात्रस्वरूपत्वप्रतिपादने सत्यपि अपहतपाप्मत्वादिमद्विज्ञानस्वरूपाविर्भावादविरोधं भगवान् वादरायणो मन्यते। कुतः? मुक्तजीवसम्बन्धितया अपहतपाप्मत्वाद्युपन्यासात्।

**चतुर्थोऽध्यायस्य चतुर्थपादस्य सङ्कल्पाधिकरणाम्-**

अस्मिनधिकरणे द्वे सूत्रे स्तः

- सङ्कल्पादेव तच्छ्रुतेः
- अताएवानन्याधिपत्तिः

**सङ्कल्पादेव तच्छ्रुतेः** इति-

मुक्तस्य सङ्कल्पादेव पित्रादिप्राप्तेः। कुतः? "स यदि पितृलोककामो भवति सङ्कल्पादेवास्य पितरः समुत्तिष्ठन्ति" इति तदभिधानश्रुतेः।

**अताएवानन्याधिपत्तिः** इति-

परब्रह्मात्मको मुक्त आविर्भूतसत्यसङ्कल्पत्वादेवानन्याधिपतिर्भवति "स स्वराड् भवति"[145] इति श्रुतेः।

---

[145] -छान्दो० ७.२५ ॥

## चतुर्थोऽध्यायस्य चतुर्थपादस्य अभावाधिकरणम्-

अस्मिनधिकरणे सप्तसूत्राणि सन्ति-

- अभावं वादरिराह ह्येवम्
- भावं जैमिनिर्विकल्पामननाम्
- द्वादशाहवदुभयविधं वादरायणोऽत:
- तन्वभावे सन्ध्यवदुपपत्ते:
- भावे जाग्रद्वत्
- प्रदीपवदावेशस्तथा हि दर्शयति
- स्वाप्ययसम्पत्त्योरन्यतरापेक्षमाविष्कृतं हि

**अभावं वादरिराह ह्येवम्** इति-

भुक्तस्य शरीराद्यभावं वादरिर्मन्यते यत: "अशरीरं वाव सन्तं न प्रिया-प्रिये स्पृश्यत" इति श्रुतिस्तथैवाह।

**भावं जैमिनिर्विकल्पामननाम्** इति

तच्छरीरादिभावं जैमिनिर्मन्यते। कुत:? "स एकधा भवति त्रिधा भवति" इत्यादि वैविध्यामननात्।

**द्वादशाहवदुभयविधं वादरायणोऽत:** इति-

सङ्कल्पादेव शरीरत्वमशरीरत्वञ्च मुक्तस्य भगवान् बादरायणो मन्यते। द्वादशाहस्य यथा "द्वादशाहमृद्धिकामा उपेयु:" द्वादशाहेन प्रजाकामं याजयेदिति सत्रत्वमहीनत्वञ्च भवति तद्वत्।

**तन्वभावे सन्ध्यवदुपपत्ते:** इति-

स्वसृष्टशरीराद्यभावे स्वप्नवद्भगवत्सृष्टशरीरादिना मुक्तभोगोपपत्तः शरीरादेर्मुक्तसृज्यत्वानियमः।

**भावे जाग्रद्वत्** इति-

स्वसृष्टशरीरादिभावेऽपि मुक्तस्य भगवल्लीलारसभोगोपपत्तेः कदाचिद्भगवल्लीलानुसारिणा स्वसङ्कल्पेनापि सृजति।

**प्रदीपवदावेशस्तथा हि दर्शयति** इति-

प्रभाया दीपस्येव ज्ञानेन धर्मभूतेन जीवस्यानेकशरीरेष्वावेशो भवति "स चानन्ताय कल्पते" इति श्रुतिस्तथाहि दर्शयति।

**स्वाप्ययसम्पत्त्योरन्यतरापेक्षमाविष्कृतं हि** इति-

"प्रज्ञेनात्मना परिष्वक्तो न बाह्यं किञ्चन वेद नान्तरमि" ति वाक्यं तु न मुक्तविषयं किन्तु सुषुप्त्युन्क्रान्त्योरन्यतरापेक्षम् "नाह खल्वयं सम्प्रत्यात्मानं जानात्यहमस्मी" ति "नो एवेमानि भूतानि विनाशमेव" इति भूतानीति "एतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यती" ति च "स वा एष एतेन दिव्येन चक्षुषा मनसैतान् कामान् पश्यन्नि" ति च जीवस्योभयत्र निर्बोधत्वं मुक्तावस्थायां च सर्वज्ञत्वं शास्त्रेणाविष्कृतम् इति विदेहमुक्तस्य सर्वैस्वर्यनिरूपणम्।

**चतुर्थोऽध्यायस्य चतुर्थपादस्य जगद्व्यापारवर्ज्जाधिकरणम्-**

अस्मिनधिकरणे षट् सूत्राणि सन्ति-

- जगद्व्यपारवर्जं प्रकरणादिसन्निहितत्वाच्च
- प्रत्यक्षोपदेशान्नेति चेन्नाधिकारिकमण्डलस्थोक्तेः
- विकारावर्त्ति च तथाहि स्थितिमाह

- दर्शयतश्चैवं प्रत्यक्षानुमाने
- भोगमात्रसाम्यलिङ्गाच्च
- अनावृत्तिः शब्दादनावृत्तिः शब्दात्

**जगद्व्यापारवर्जं प्रकरणादिसन्निहितत्वाच्च** इति-

जगत्सृष्ट्यादिव्यापारेतरं मुक्तैश्वर्यम्। कुतः? यतो वा इमानि भूतानि जायन्ते" इत्यादौ परब्रह्मप्रकरणान्मुक्तस्य तत्रासन्निहितत्वाच्च।

**प्रत्यक्षोपदेशान्नेति चेन्नाधिकारिकमण्डलस्थोक्तेः** इति-

"स स्वराड् भवति तस्य सर्वेषु लोकेषु कामचारो भवति" इत्यादि श्रुत्या मुक्तस्य जगद्व्यापारप्रतिपादनात्, "जगद्व्यापारवर्ज्जमि" ति यदुक्तं तन्नेति चेन्न तया श्रुत्या हिरण्यगर्भादिलोकस्थानां भोगानां मुक्तानुभवविषयतयोक्तत्वात्।

**विकारावर्त्ति च तथाहि स्थितिमाह** इति-

जन्मादिविकारशून्यं स्वाभाविकाचिन्त्यानन्तगुणसागरं सविभूतिकं ब्रह्मैव मुक्तोऽनुभवति। तथाहि मुक्तस्थितिमाह श्रुतिः। "यदा ह्येवैष एतस्मिन्न दृश्ये अनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दतेऽथ सोऽभयं गतो भवति" "रसो वै सः रस ह्येवायं लब्ध्वा आनन्दीभवति" इत्यादिका।

**दर्शयतश्चैवं प्रत्यक्षानुमाने** इति-

कृत्स्नजगत्सृष्ट्यादि व्यापारार्हब्रह्मैव "स कारणं कारणाधिपाधिपः सर्वस्य वशी सर्वस्येशानः" "मयाध्यक्षेण प्रकृतिः सूयते सचराचरमि" ति श्रुतिस्मृती दर्शयतः "जगद्व्यापारवर्ज्जं मुक्तैश्वर्यम्"।

**भोगमात्रसाम्यलिङ्गाच्च** इति-

"सोऽश्नुते सर्वान् कामान् सह ब्राह्मणा विपश्चिते" ति भोगमात्रसाम्यलिङ्गाच्च मुक्तेश्वर्य्यं जगद्व्यापारवर्ज्जम्।

**अनावृत्ति: शब्दादनावृत्ति: शब्दात्** इति-

परंज्योतिरुपसम्पन्नस्य संसाराद्विमुक्तस्य प्रत्यगात्मन: पुनरावृत्तिर्न भवति। कुत:? "एतेन प्रतिपद्यमाना इमं मानवमावर्त्तं नावर्त्तन्ते" "मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते" इति शब्दात् प्रतिपादितम्। तदेवं चतुर्थपादे मोक्षस्वरूपम् यथा परमात्मा सर्वज्ञ: सर्वकारणं सर्वसद्गुणसमुद्र: सर्वनियन्तेति शब्दादवगम्यते तथा निवृत्तसर्वाविद्यस्य परब्रह्मभावापन्नस्य मुक्तस्यापि न पुनरावृत्तिरिति शब्दादेवावगम्यते। परमात्मापि तादृशं स्वातिप्रियं ज्ञानिनं न कदाचिदपि स्वस्मात् स्वलोकाच्च वियोक्तुमिच्छतीति। श्रुतिस्मृतेप्रमाणै: कौस्तुभप्रभायां विस्तरेण उपपादितम्। तदेवं भगवद्भाव सम्पत्तिरेव मुक्ति: वेदान्तशास्त्रस्य फलम्। मुक्तिरश्च भगवान्श्रीकृष्ण: स च ध्यानैकलभ्य: इति कौस्तुभप्रभायाम् चतुर्थाध्यायस्य सार: उक्त:।

भगवद्भावसम्पत्तिं मुक्तिं श्रुतिमुखेरिताम्।

फलं वेदान्तशास्त्रस्य प्रावोचद्बादरायण:॥

सर्ववेदशिरोगीतस्तर्कातीतश्च यो हरि:।

ध्यानेन मुक्तिद: कृष्णस्तं मुकुन्दं गुरुं श्रये॥

इति उपसंहार:।

ग्रन्थोपसंहारस्थितमंगलाचरणश्लोकेन ब्रहममीमांसादर्शनस्य विषय: फलसाधनश्चेत्येतत् सर्वं कौस्तुभप्रभायां साररूपेणोक्तमिति सम्यग् ज्ञायते।

**चतुर्थोऽध्याय: समाप्त:**

# उपसंहार:

अयं शोधप्रबन्ध: भागत्रयेण विभक्त:। प्रथम: भूमिकाभाग:, द्वितीय: ग्रन्थभाग: तृतीय: परिशिष्टभागश्चैति। तत्र भूमिकाभागे मया आदौ संक्षेपत: भारतीयदर्शनानां स्वरूपं विवेचितम्। तदनन्तरं भारतीयदर्शनेषु तत्रापि वैदिकदर्शनेषु वेदान्तदर्शनस्य वैशिष्ट्यं निरूपितम्।

वेदानामन्तो निर्णय: परतत्त्वगोचर: यत्रास्ति स: वेदभाग: वेदान्त:। ईश्वरसृष्टौ सर्वेषां वेदानां नि:श्वसितवदप्रयत्नेन लीलान्यायेन युगपदाविर्भूतत्वात्। वेदसृष्टिसमनन्तरमन्ते सृष्टिविषयीभूतो ग्रन्थभाग: वेदान्त इति केषांचन कथनमसंगतमेव। ईश्वरसृष्टत्वात् वेदा: पौरूषेया: इत्याशंकायाम् आस्तिकशिरोमणि: जैमिनि: आख्या: प्रवचनात् इति अपौरुषेयत्वं सिद्धान्तयामास। तदनुरोधेन वेदान्तानामुपनिषदाह्वयानामपि अपौरुषेयत्वं सिद्धम्।

## वेदान्तानां प्रामाण्यम्-

सर्वज्ञनित्यनित्यनिर्दोषेश्वरसृष्टिविषयस्य वेदमात्रस्य प्रामाण्यमिव तदन्तर्भूतवेदान्तानामपि प्रामाण्यम्। न चेश्वरसिद्धौ तत्कृतत्वेन प्रामाण्यसिद्धि: तत्सिद्धावीश्वरसिद्धिरिति परस्पराश्रयदोषशङ्काया अवसर:। ईश्वररूपधर्मिग्राहकवेदप्रमाणादेव स्वत: प्रमाणीभूतादीश्वरस्य वेदकर्तृत्वस्यापि सिद्धे:

उभयसिद्धिर्युगपदेव। न हि वेदप्रामाण्यसाधनेऽनुमानादिपरमुखनिरीक्षणं क्रियते स्वतः प्रामाण्यवादिभिः। तथा च य एव वेद ईश्वरं बोधयति स्वतः प्रमाणीभूतः सन् स एव तत्स्रष्टृत्वं च बोधयति। यथा कालिदासादिकृतः शाकुन्तलादिग्रन्थः स्वकर्तारं वाच्यवृत्त्या बोधयति। अस्य वेदान्तस्य तात्पर्यनिर्णयार्थम् सूत्रप्रस्थानम् महर्षि बादरायणेन कृतम्।

**बादरायणः सूत्रप्रस्थानं च-**

अयं महामुनिरेक एव द्वैपायन इति कृष्णद्वैपायन इति, बादरायण इति व्यास इति वेदव्यास इति पाराशरिरिति च जेगीयते महाभारते पुराणेषु च। भारते-

व्यस्तवेदतया व्यास इति लोके श्रुतो मुनिः।

अयं साक्षान्महायोगी व्यासः सर्वज्ञ ईश्वरः॥

विव्यास वेदान् यस्माच्च तस्माद् व्यास इति स्मृतः।

द्वीपे न्यस्त स्वयं बालस्तस्माद्वैपायनोऽभवत्॥ इति

वेदविभजनेन व्यास इति पराशरात् योजनगन्धायाम् उत्पन्नमात्रस्य बालस्य द्वीपे न्यस्तत्वात् तद्द्वारा द्वीपायनत्वलंभनात् द्वैपायन इति कृष्णवर्णत्वात् कृष्ण इति बदरीवनसमाश्रयणात् बादरायण इति पराशरपुत्रत्वात् पाराशरिरिति सप्रवृत्तिनिमित्तं विविधैर्नामभिरभिगीतः। एवमेव अपान्तरतपा इति नाम्नाऽपि भारते प्रसिद्धः यथा-

अपान्तरतपा नाम वेदाचार्यः स उच्यते।

प्राचीनगर्भं तमृषिं प्रवदन्तीह केचन॥

तत्राप्यनेकधा भेदात् वेदव्यासेति संज्ञितः।

कृष्णे युगे च संप्राप्ते कृष्णवर्णो भविष्यसि॥

धर्माणां विविधानां च कर्ता ज्ञानाकरस्तथा। इति।

इदमेव ब्रह्मसूत्रं ब्रह्मदर्शने विदुषां नेत्रस्थानीयम्। अतः अभियुक्तैः उक्तं "व्याससूत्रमिदं नेत्रं विदुषां ब्रह्म दर्शने" इति। अस्य सूत्रस्योपरि बहुभिः आचार्यैः भाष्याणि प्रणीतानि। तेषु मुख्यानि भाष्याणि- श्रीशंकरभाष्यम्, श्रीभाष्करभाष्यम्, श्रीरामानुजभाष्यम्, श्रीनिम्बार्कभाष्यम्, श्रीमध्वभाष्यम्, श्रीकण्ठभाष्यम्, श्रीपतिभाष्यम्, श्रीवल्लभभाष्यम्, श्रीविज्ञानभिक्षुभाष्यम्, श्रीबलदेवभाष्यम् एतेषां भाष्याणां मध्ये निम्बार्क भाष्यम् अनितरसाधारणम् जीवब्रह्मणोः जगतश्च स्वाभाविकं भेदाभेदबोधकम्।

अस्य निम्बार्कभाष्यस्य अपरं नाम वेदान्तपारिजातसौरभम् इति। अस्योपरि श्रीश्रीनिवासाचार्यैः वेदान्तकौस्तुभाख्या व्याख्या कृता। अस्य व्याख्यास्योपरि वेदान्तकौस्तुभप्रभा श्री केशवकाश्मीरिभट्टैः विरचिता। अतः मया शोधप्रबन्धे

भूमिकाभागे निम्बार्कदर्शनस्य वैशिष्ट्यम्। भाष्यकाराणां वृत्तिकाराणां प्रभाकाराणां ऐतिह्यं किञ्चिन् निरूपितम्।

द्वितीयः ग्रन्थभागः चतुर्भिः अध्यायैः विभक्तः। तत्र क्रमशः ब्रह्मसूत्राणां चतुर्णामध्यायानाम् सूत्रप्रस्थानक्रमेणैव समीक्षा कृता।

**i. वेदान्तकौस्तुभप्रभायाः प्रथमोऽध्यायस्य समीक्षात्मकः- (प्रथमोऽध्यायः)**

तत्र प्रथमाध्याये चत्वारः भागाः सन्ति। तेषु क्रमशः प्रथमोऽध्यायस्य चतुर्णां पादानां कौस्तुभप्रभारीत्या समीक्षणम् कृतम्। अत्र वेदान्तकौस्तुभप्रभायाम् आदौ जिज्ञासाधिकरणे निम्बार्कदर्शन रीत्या वेदान्तपारिजात्सौरभे निम्बार्कभगवत्पादैः यथा वेदान्तस्य अनुबन्धाः उक्ताः तथैव अनुबन्धाः उक्ताः। तथाहि तत्र श्रेयस्कामो मुमुक्षुरत्राधिकारी। विषयश्चास्य ब्रह्मशब्दाभिधेयः सर्वज्ञः स्वाभाविकाचिन्त्यानन्तयावदात्मवृत्तिशक्तिगुणाद्याश्रयो ब्रह्मरुद्रेन्द्रप्रकृतिपरमाणुकालकर्मस्वभावादिनियन्ता दोषास्पृष्टसीमा चिदचित्स्वाभाविकभिन्नाभिन्नत्वाश्रयो भगवन् वासुदेवः श्रीपुरुषोत्तमः। एतदनुबन्धस्य चतुष्टयम परमते अर्थाद् अद्वैतमते नोपपद्यते इति कौस्तुभप्रभायाम् अद्वैतमतस्य यथा निराकरणम् कृतं दृश्यते तथैव अद्वैतवेदान्तदर्शनस्य तत्वप्रदीपिका अद्वैतसिद्धिः अद्वैतमकरन्दः इत्यादि ग्रन्थानामवलोकनपूर्वकं मया शोधप्रबन्धे समीक्षा कृता। तदनन्तरम् प्रथमाध्याये भगवति श्रीपुरुषोत्तमे वासुदेवेव

वेदान्तवाक्यानां समन्वयः इति कौस्तुभप्रभायां अस्मिन्नध्याये स्पष्टरूपेण प्रतिपादितम्। तदेवं प्रथमाध्याये चतुर्भिः भागैः ब्रह्मसूत्रस्य समन्वयाध्यायस्य कौस्तुभप्रभा रीत्या विवेचनम् कृतम्।

कस्माच्चिदावश्यकादनन्तरं ब्रह्मजिज्ञासा कर्तव्या यतो जगतो जन्मादि तद्ब्रह्मेति शास्त्रयोनित्वात्तदप्यस्ति समन्वयात् सर्वत्र श्रुतिषु समनुगमात् तत्सिद्ध्यति जगत्कारणं ब्रह्मैव ईक्षितृत्वात् नापरमशब्दत्वात् आत्मशब्दादपि तदेव सर्वत्र गतिसामान्यात् तदेव प्रतिपाद्यं शास्त्रे। आनन्दमय अन्तस्थाकाश- प्राणादिशब्दाः ब्रह्मपराः। न जीवो नान्यद्वा सन्दिग्धवाक्येषु। जगत्कारणं ब्रह्म प्रकृतिः निमित्तं च प्रतिज्ञादृष्टान्तानुपरोधात्। अव्यक्त अजा पञ्चजनशब्दा यत्किंचिदानुमानिकपरा न भवन्ति इति।

## ii. वेदान्तकौस्तुभप्रभायाः द्वितीयोऽध्यायस्य समीक्षणम्-

द्वितीयाध्यायः विरोधपरिहाराध्यायः अयमध्यायः उक्तसमन्वयस्य सांख्यादिस्मृतियुक्तिभिर्विरोधपरिहाराय प्रधानादिवादानां युक्त्याभासत्वदर्शनाय प्रतिवेदान्तं सृष्ट्यादिप्रक्रियाया एकविधत्वदर्शनाय च प्रवृत्तः। अत्रापि क्रमशः चतुर्भिः भागैः चतुर्णां पादानां समीक्षणं कृतम्।

इतरस्मृत्यनवकाशदोषप्रसङ्गेऽन्यस्मृतेरपि तत्प्रसङ्ग इति स्मृतिविरोधः प्रतिबन्द्या उत्तरितः। ब्रह्मविलक्षणस्यापि जगतोऽचेतनं ब्रह्म प्रकृतिर्भवति

विजातीयादपि विजातीयमुत्पद्यमानं दृश्यते लोके। प्रलयकालेऽपि कार्येणाविभक्तमपि कारणं ब्रह्म कार्यदोषेणासंसृष्टमित्यत्र दृष्टान्तभावात् तेनासंसृष्टं भवितुमर्हति। ब्रह्मकार्यं न सदिति आपादनानर्हं सदात्मना सर्वस्मिन्नपि कालेऽवरस्य सत्वात्। शुष्कतर्कस्याप्रतिष्ठानात् यथाशब्दमेव ब्रह्मावगन्तव्यम्। तर्केणानुमितेऽप्यनिर्मोक्षप्रसङ्गः। इतरापादिता दोषाः स्वपक्षेऽपि स्युः। युक्तिविरुद्धत्वात् शिष्टापरिगृहीतत्वाच्च इतरशास्त्रोक्तार्थस्यात्यन्तमनपेक्षा। लोकवच्च भोक्तृभोग्यरूपविभागोपपत्तिः ब्रह्मकारणवादे: अतोऽविभागशङ्कायाः नावसर। कारणानन्यत्वं च कार्यस्य कारणसत्वे एव कार्योपलब्धेः। कार्यस्य सत्त्वाच्च आरम्भणशब्दादिभ्यश्च। जीवादधिकं ब्रह्म स्वीक्रियते जीवाद्भेदेन निर्देशात्। हिताकरणादिदोषप्रसक्तिर्नास्ति। तथाऽश्मादिवत् क्षीरवत् देवादिवच्च जगत्परिणामे तन्निर्माणे वा स्वतः समर्थं भवति ब्रह्म। शब्दमूलत्वाद् ब्रह्मणो निरवयवत्व शब्दविरोधोऽन्यो वा दोषस्तत्र न प्रसञ्जनीयः। आत्मनि विचित्रसृष्टिवत् परब्रह्मण्यपि विचित्रसृष्टिरुपपद्यते। ब्रह्म करणरहितमपि सर्वशक्तियुक्तमिति श्रुत्युदीरितत्वात् जगत्कारणं भवति। तथा ब्रह्मणः स्वप्रयोजनाभावेऽपि सर्जनं लोकवल्लीलामात्रम्। धर्मादिसापेक्षत्वात् विचित्रसृष्टिकर्तृब्रह्मणो वैषम्यनैर्घृण्यदोषप्रसक्तिरपि न संभवति। संसारस्यानादित्वात् कर्मादिसंभवेन तदपेक्षं सत् सृष्टिकर्तृ भवति ब्रह्मेति युक्तमेव।

विचित्ररचनारूपसृष्ट्यनुपपत्तेः प्रवृत्त्यनुपपत्तेश्च जगत्कारणमानुमानिकं[146] न। सर्वत्र चेतनाधिष्ठितमेवाचेतनं प्रवर्तते इति वक्तव्यम्। पयोऽम्बुदृष्टान्तोऽपि न प्रतिकूलः तत्रापि चेतनानुमानात्। तृणादिरपि धेन्वादिरूपचेतनोपयुक्त एव क्षीरीभवति। एवं पङ्गुदृष्टान्तोऽपि न प्रतिकूलः स्वयमप्रवर्तमानोऽपि पङ्गुः प्रधानं प्रवर्तयेत्। अयस्कान्तदृष्टान्तोऽपि नानुकूलः सांख्यानाम्। प्रवृत्तिनित्यत्वप्रसङ्गात्। अतश्च प्रधानं स्वतन्त्रं न कारणम्। परस्परविरोधाच्चासमञ्जसं सांख्यदर्शनम्।

अयं विशेषः निम्बार्कदर्शने अविकृतपरिणामवादः स्वीक्रियते ब्रह्मसत्यं जगदपि सत्यम् जीवाऽपि सत्याः। अस्मिन् दर्शने भेदः अभेदः द्वावपि स्वाभविकौ अतः स्वाभाविक भेदाभेदवादः। अत्र मते स्वीकृतः। इति कौस्तुभप्रभायां मतान्तराणां निराकरणपूर्वकं प्रतिपादितम्।

नापि परमाणवो जगत्कारणम्। सृष्ट्युपयोगिभूताद्यकर्माभावात्। रूपादिमत्वाच्च परमाणुस्वरूपं विपर्ययमापद्यते। शिष्टापरिग्रहाच्चात्यन्तमनपेक्षा परमाणुकारणवादस्य। समुदायानुपपत्त्यादिभिर्दोषैः सर्वास्तित्ववादिमतमपि अनुपपन्नम्। क्षणिकात्मवादोऽपि न समीचीनः अनुस्मृतेः स्थिरात्मधिकत्वात्। एवमसदपि शून्यं न जगत्कारणम् असतः कार्योत्पत्तेर्न दृष्टत्वात्। नापि बाह्यप्रपञ्चस्य सर्वथा अभावः ज्ञानव्यतिरेकेणोपलब्धेः। अतोऽपि स्वप्नजागरितयोः वैधर्म्याच्च न स्वाप्नप्रत्ययतुल्यत्वं जाग्रत्प्रत्ययस्य।

[146] -प्रधानमिति यावत्।

बाह्यार्थसद्भाव:। सर्वथाऽनुपपत्तेश्च नासद्वाद: समीचीन:। नाप्यनेकान्तवाद: एकस्मिन् विरुद्धानां युगपदसंभवात्। आत्मनाश्च सर्वात्मना शरीरादौ व्यापित्वासंभवाच्च। पशुपते: जगत्कारणत्वासंभव: सम्बन्धानुपपत्त्यधिष्ठानानुपपत्त्यादिदोषेभ्य:।

वियदप्युत्पद्यते प्रतिज्ञोपपत्ते:। यावद्विकारजातं विभक्तं दृश्यते लोके तद्वत् वियदपि विकार एव। एवं वायुरपि। सतो ब्रह्मण: उत्पतिस्तु नोपपद्यते कुतश्चित्। पृथिव्यप्तेजसां च यथाक्रममुत्पत्ति:। उत्पत्तिविपरीतक्रमेण लय:। आत्मनि जातादिव्यवहारस्तु भाक्त: शरीरोपाधिक:। स्वरूपतोऽप्यात्मा नोत्पद्यते नित्यत्वात् श्रुतिभ्यश्च स्वरूपत: तदुत्पत्त्यनुक्ते:। सोऽप्यात्मा ज्ञस्वरूप:। सोऽपि च विभु:। अणुत्वव्यपदेशस्तु तद्गुणसारत्वमात्रेण प्राज्ञवत्। यावदात्मन: संसारित्वं तावत् व्यक्ताव्यक्तरूपेण बुद्धिसंबन्धोऽस्त्येव। एवमुक्त आत्मा कर्ता शास्त्रार्थत्वात् विहारोपदेशादिहेतुभ्यश्च। यथा च तक्षा तथाऽयमात्मा कर्ताऽकर्ता च। परमेश्वराधीनश्चायमात्मा। ईशस्यांश: नानात्वेनान्यथा च व्यपदेशात्। परमात्मा च जीवात्मवन्न भवति प्रकाशादिवत्। जीवस्य च जीव: आभास एव न परमार्थ:। प्राणा उत्पद्यन्ते। तेऽप्यणव:। श्रेष्ठश्च प्राणोऽणु:। स च प्राण: बाह्यवाय्वपेक्षया विजातीय:। स च पञ्चवृत्ति:। इन्द्रियाणि च प्राणादतिरिक्तानि। एवं कार्यकारणसंघातादुक्तादरिक्तो जीव इति गम्यते। अस्य जीवस्य नामरूपव्याकरणं न संभवति। तत्तु त्रिवृत्कुर्वत: परमेश्वरस्यैव।

### iii. वेदान्तकौस्तुभप्रभाया: तृतीयोऽध्यायस्य समीक्षणम्-

अस्मिन् त्रतीयाध्याये क्रमश: चतुर्भि: पादै: ब्रह्मसूत्रस्य तृतीयोऽध्यायस्य चतुर्णां पादानां श्री केशवकाश्मीरिभट्टविरचित कौस्तुभप्रभामाश्रित्य समीक्षणं कृतम्। प्रथमपादे जाग्रदवस्थायां जन्ममरणस्वर्गनरकगमनादिदु:खजातं जीवस्य विरागार्थं प्रपञ्चितम्। स्वप्ने सृष्टि: तज्जीवकमानुसारेण तदेकैकं जीवानुभवयोग्यमितरसकलपुरुषाननुभयमानमाश्चर्यरूपं रथादिकं श्रीपुरुषोत्तमेनैव निर्मीयते। तस्य सर्वशक्तिसत्यसङ्कल्पत्वादिस्वाभाविक-धर्मयोगात्।

य: सुप्त: स एव प्रबोधसमये समुत्तिष्ठति तदन्यो वेति विशय:? नियमहेत्वभावादनियम इति पूर्वपक्षे प्राप्त उच्यते "स एव तु" इति। तुशब्द: पक्षव्यावृत्त्यर्थ:। य: सुप्त: स एव प्रबोधसमय उत्तिष्ठति। कुत:? "कर्मेत्यादि"। पूर्वेद्युरर्धं कृतं कर्मानुस्मृत्य परेद्युस्तत्समाप्तये प्रवृत्तिदर्शनात्। योऽहमस्वाप्सं स एवाहं जागर्मीति प्रत्यभिज्ञानात्। "इमा: सर्वा: प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विदन्ति त इह व्याघ्रो वा सिंहो वा वृको वा वराहो वा कीटो वा पतङ्गो वा, दंशो वा, मशको वा, यद्यद्भवन्ति, तत् तदा भवन्ति" इत्येवमादिशब्देभ्यश्च। अग्निहोत्रं जुहुयात्" आत्मानमुपासीत इत्यादिविधिभ्यश्च। अन्यथाग्निहोत्रादिकर्मस्वर्धकृतेष्वन्यश्चेदुत्तिष्ठति, तदाग्निहोत्रादिश्रवणादिभोग-मोक्षसाधनविधायिका: श्रुतयोऽनर्थिका: स्यु:।

कृतनाशाकृताभ्यागमप्रसङ्गश्च। अहरहर्जीवानामुत्पत्तिविनाशौ च स्यातामिति प्रतिपादितम्।

न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि। परस्य ब्रह्मण: सर्वत्र चेतनाचेतनवस्तुमात्रे शुद्धाशुद्धपदार्थे स्वेच्छया प्रविष्टस्यापि स्थानतश्चेतनाचेतनादिस्थानतश्चेतनादिस्थानभूतै: पदार्थैर्नापुरुषार्थभूतहेयधर्म-सम्बन्ध:। हि यस्मात् सर्वत्र सर्वास्वपि श्रुतिस्मृतिषूभयलिङ्गं ब्रह्माम्नातम्। तत्र य आत्मापहतपाप्मा सत्यकाम: सत्यसङ्कल्प: य सर्वज्ञ: सर्ववित् यस्य ज्ञानमयं तप: आनन्दं ब्रह्मणो विद्वान् स्वाभाविकी ज्ञानबलक्रिया च भीषास्माद्वात: पवते निष्कलं निष्क्रियं शान्तम् अथात आदेशो नेति नेति इति अस्थूलमनणु इत्यादिश्रुतय:।

समस्तकल्याणगुणात्मकोऽसौ स्वशक्तिलेशोद्धतभूतसर्ग:।

तेजोबलैश्वर्यमहावबोध: स्ववीर्यशक्त्यादिगुणैकराशि:॥

पर: पराणां सकला न यत्र क्लेशादय: सन्ति परावरेशे।

यो मामजमनादि च वेत्ति लोकमहेश्वरम्।

मयाध्यक्षेण प्रकृति: उत्तम: पुरुषस्त्वन्य: सर्वज्ञ: सर्वकृत् सदा।

सर्वशक्ति: सर्वकर्मा सर्वज्ञानबलादिमान्।

अन्यूनश्चाप्यवृद्धश्च स्वाधीनो नादिमान् वशी।

काशतन्द्राभयक्रोधकामादिभिरसंयुत:॥

निरवद्य: परप्राप्तेर्निरधिष्ठोत्तरक्रम:।

इत्यादिस्मृतयश्च समस्तहेयलेशास्पृष्टमाहात्म्यमशेषकल्याणगुणसागरं परं ब्रह्म प्रतिपादयन्तीत्यर्थ:। एतदभिप्रेत्योक्तं श्रीभगवताद्याचार्येण वाक्यकारेण।

"स्वभावतोऽपास्तसमस्तदोषमशेषकल्याणगुणैकराशिम्। इत्यादिना।

प्रथम द्वितीयपादाभ्यां जन्ममरणादिदु:खनिलयत्वरूपप्रपञ्चदोषोक्त्या ब्रह्मणो हेयसम्बन्धरहितत्वकल्याणगुणसागरत्वनिरूपणेन तस्यैव सर्वफलदायित्वनिरूपणेन च तत्तृष्णैव तदितरवितृष्णापूर्विका तत्प्राप्तिकारणमिति दर्शितम्। चतुर्थपादे विद्याया: स्वतन्त्र्यकर्मण: तदङ्गत्वमिति निरूपयितुम् विद्यात् एवपुरुषार्थ: इति निर्णीतम् एवं तृतीयाध्याये मोक्षसाधनविचार: निम्बार्क दर्शनदिशा कौस्तुभप्रभायां सम्यक् विवेचितम्।

स च जीवो देहान्तरप्रतिपत्तौ देहबीजभूतसूक्ष्मै: संपरिष्वक्तो गच्छति। कर्मवशाच्चन्द्रमण्डलमारूढ: कृतसुकृतस्यात्ययेऽनुशयवानवशिष्टोत्तरकर्मा यथेतमनेवं च पुनरागच्छति। इष्टादिकारिभिन्नास्तु पापिन: संयमने यमालये दुष्कृतानुरूपा यामीर्यातना अनुभूय पुनरेवेमं लोकं प्रत्यवरोहन्ति। इष्टादिकारिण: चन्द्रलोकादवरोहणे प्रथममाकाशं प्राप्य तेन मिलिता: तस्तदृशीभूय एवमेवक्रमेण वायौ धूमे अभ्रे मेघे च

मिलिता: सन्त: तत्सदृशा भवन्ति। प्रवर्षणानन्तरं पृथिव्यां व्रीहियवादिस्थावरशरीरेषु अन्याधिष्ठितेषु संश्लिष्टा: सन्त: अतिचिरेण पुरुषे संसृष्टा: ततो रेतोद्वारा स्त्रीषु संसृष्टा: भवन्ति। ततस्तत्तत्कर्मानुसारेण विशिष्टमानुषादिजातिं प्रतिपद्यन्ते। एवमेव जीवस्य संसारगीतप्रभेदश्चिन्तित:।

**वेदान्तकौस्तुभप्रभाया: चतुर्थाध्यायस्य समीक्षणम्-**

चतुर्थाध्याये क्रमश: ब्रह्मसूत्रस्य चतुर्थाध्यायस्य चतुर्णां पादानां समीक्षणम् कृतम्। चतुर्थोऽध्याये विद्याया: फलचिन्ता प्राधान्येन कृता। अत्र विदुषो विद्यामाहात्म्यात् संचितक्रियमाणयोरश्लेषविनाशी। प्रारब्धस्य तु कर्मणो भोगेन विनाश:। तत्र प्रारब्धस्य विद्यायोनिशरीरेणेतरशरीरैर्वा भुक्त्वा विनाशान्मोक्ष इति प्रतिपादितम्। द्वितीयपादे विद्वद्गतिप्रकार: चिन्तित:। तत्र उत्क्रान्तिमारभ्य नाडीविशेषेणोत्क्रम्य रश्म्यनुसारी सन् देवयानेन पथा गतो विद्वान् परं ब्रह्म प्राप्नोतीति प्रतिपादितम्। तृतीये पादे अर्चिरादिरेक एव मार्गोऽनेकविशेषणविशिष्ट: सर्वश्रुतिभि: प्रतिपद्यते तेनैव विद्वान् ब्रह्म गच्छति। कुत:? तत्प्रथिते: प्रथिति: प्रसिद्धि:। तस्यैव सर्वत्र प्रसिद्धत्वात् पञ्चाग्निविद्यापरकरणे ये चेमेऽरण्ये श्रद्धा तप इत्युपासत इति विद्यान्तरशालिनामप्यर्चिरादिमार्गेणैव गत्यभिधानात्।

द्वावेव मार्गौ प्रथितावर्चिरादिर्विपश्चिताम्।

धूमादि: कर्मिणां चैव सर्ववेदविनिर्णयात्॥ इति स्मृते:

पन्थानौ पितृयाणश्च देवयानश्च विश्रुतौ।

दुर्जनाः पितृयाणेन देवयानेन मोक्षिणः॥

इति मोक्षधर्मे च स्मरणात् श्रुत्यन्तरोक्तानामेकदेशानां विद्यागुणोपसंहारवच्छ्रुत्यन्तर उपसंहारात् स एव सर्वत्र न्यूनाधिकभावेन प्रतिपाद्यते। प्रकरणभेदेऽपि विद्यायाः प्राप्तव्यस्य चैकत्वादेकमार्गकल्पनमनर्थकम्। सम्भवत्येकवाक्यत्वे वाक्यभेदस्यान्याय्यत्वात् एतैरेव इत्यवधारणस्यापि रश्मिप्राप्तिपरत्वादेकेयं सृतिरिति प्रतिपादितम्। अत्र कौस्तुभप्रभायां जीवब्रह्मणोः भेदस्यापि स्वाभाविकत्वेनाणुपरिमाणस्य च श्रुतिमानसिद्धत्वेन पारमार्थिकत्वाद्बन्धमोक्षयोरुत्क्रान्तिगत्यागतीनां च सामञ्जस्यम् इति प्रतिपादितम्। चतुर्थपादे गन्तव्यस्य प्राप्तस्य स्वरूपं निर्णीतम्। अत कौस्तुभप्रभायाम् विस्तरेण मोक्षविषये दार्शनिकानां मतभेदः समीक्षिताः।

एकविंशतिप्रकारकदुःखध्वंसो मोक्ष इति गौतमीयानामभ्युपगमः। तथा हि तदत्यन्तविमोक्षोऽपवर्ग इति। अतर् तच्छब्देन सूत्रोपात्तानामेकविंशतिप्रकारकदुःखानां परामर्शः। तानि च शरीरम् षडिन्द्रियवर्गः षड्विषयाः सद्बुद्धयः सुखं दुःखं चेति। आत्यन्तिकत्वं च स्वसमानाधिकरणदुःख-तत्प्रागभावासमानकालिकत्वम्। सुषुप्त्यादौ दुःखध्वंसस्य दुःखासमानकालिकस्य सत्त्वात् तत्प्रागभाव इति। उपान्त्यदुःखध्वंसस्य तत्प्रागभावासमानकालिकत्वाद् दुःख इति। तत्र शरीरेन्द्रियविषयबुद्धीनां

दुःखसाधनत्वाद् दुःखत्वम्। दुःखस्य स्वरूपतः। पूर्वापरदुःखसंवलितत्वात् सुखस्यापि दुःखत्वमिति। दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः इति सूत्रादिति। तन्न तस्य पुरुषार्थत्वाभावात् पुरुषव्यापारासाध्यत्वात्। अतीतस्य स्वविरोधिगुणान्तरनाश्यत्वात्। आगामिनः स्वकारणानाशेन नाश्यत्वात्। वर्तमानस्यापि स्वोत्पन्नगुणनाश्यत्वात्।

किञ्च नित्यसुखाभिव्यक्तिर्मुक्तिर्न दुःखप्रहाणमात्रम्। नैतावन्मात्रमुद्दिश्य प्रवृत्तिः सम्भवति। प्रवृत्तिसामान्यं प्रतीष्टसाधनताज्ञानस्य प्रवर्तकत्वात्।

नन्वनिष्टाभावसाधनताज्ञानमपि प्रवर्तकमिति चेत् न अनिष्टाभावस्यापीष्टसिद्धावेव विनियोगात्। कण्टकविद्धपादस्य कण्टकापनयेन प्रवृत्तिर्न केवलं कण्टकाभावोद्देशेन किन्तु यथेष्टप्रचाररूपेष्टसिद्ध्यर्थेति प्रसिद्धम्।

अथ दुःखनिवृत्तिमात्रं मोक्षः। आनन्दादिशब्दाश्च दुःखाभावमात्रावलम्बिनः। यदि च सुखं रागेण वर्तेत ततो बन्ध एव स्यात् रागस्य बन्धहेतुत्वात्। देहेन्द्रियमनसां निवृत्तौ विज्ञानोत्पत्तिहेत्वभावान्मुक्तो निःसंज्ञः पाषाणकल्पोऽवतिष्ठते इति वैशेषिका आहुः।

तत् तुच्छम् असम्भवात्। तथा हि यदुक्तं रोगो बन्धहेतुः इति तदयुक्तम् शास्त्रादयं विभागो गम्यते। यथा स्वदारगमनं धर्माय परदारगमनं चाधर्माय। तथाविधविषयको रागो बन्धहेतुः। निरतिशयानन्दपरात्मविषयकश्च रागो मोक्षहेतुः।

नाप्यानन्दादिशब्दो दुःखाभाववचनः। शतगुणोत्तरक्रमेणोत्कर्षापकर्षौ प्रतिपाद्य निरतिशयस्य ब्रह्मानन्दस्योपदेशात्। यतो वाचो निवर्तन्ते अप्राप्य मनसा सह आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चन इति मन्त्रात्। नहि निरुपाख्यस्याभावस्योत्कर्षापकर्षौ सम्भवतः। लोकेऽपि दुःखतारतम्यं सुखतारतम्यं च परस्परविलक्षणं प्रत्यक्षेणानुभूयते।

किञ्च यदि पाषाणकल्प एव मोक्षोऽभीष्टः तर्हि पाषाणादीनामेव मुक्तत्वमभ्युपगन्तव्यं तर्कनिपुणैः।

सांख्यास्तु चैतन्यस्वभाव आत्मा तस्य द्रष्टुः स्वरूपे चैतन्यमात्रेऽवस्थानमसम्प्रज्ञातयोगनिष्पत्तौ मोक्ष इति मन्यन्ते। तच्चिन्त्यम् ब्रह्मानन्दाभावे निरतिशयानन्दापत्त्यभावात्।

पातञ्जलास्तु असतो ब्रह्मभावस्य योगानुष्ठानाज्जन्म मोक्ष इत्याहुः। तदपि चिन्त्यम् असतो जन्मायोगात्। शशशृङ्गादावतिव्याप्तेश्च। ब्रह्मैव सन् ब्रह्माप्येति इति श्रुतिविरोधाच्च। पञ्चक्लेशादिध्वंसश्चास्मत्पक्षेऽपि। समान एवेत्यलं प्रासङ्गिकेन।

तस्मात् पूर्वोक्तलक्षणा भगवद्भावापत्तिरेव मोक्ष इति सिद्धम्। स च मोक्षो भगवदनुग्रहैकलभ्यतत्साक्षात्कारैकलभ्य। साक्षात्कारश्च प्राप्तध्रुवस्मृतीनां भुक्तप्रारब्धकर्मणामेव।

यमेवैष वृणुते तेन लभ्यः

भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशया:।

क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे॥

यदा पश्य: पश्यते रुक्मवर्णम् इत्यादिश्रुतिभ्य:। तस्मिन्निति सर्ववेदान्तप्रसिद्धे ब्रह्मणि श्रीपुरुषोत्तमे दृष्टे साक्षादनुभूते सति हृदयग्रन्थि: अनादिकर्मनिरूपोतमायासम्बन्ध: कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मसु इति श्रीमुखोक्तेर्भिद्यते ध्वंसमापद्यते स्वयमेवेति इति प्रतिपाद्यते।

परिशिष्टभागे सन्दर्भग्रन्थानां सूची संयोजिता-

# सन्दर्भग्रन्थ सूची


1. **अद्वैतसिद्धिः,** विट्ठलेशीयव्याख्योबृहित, अनन्तकृष्णशास्त्री, परिमलपब्लिकेशन, ३३/१७, शक्तिनगरम्, देहली, १९८८।
2. **अद्वैतसिद्धिः,** श्रीमद्योगेन्द्रनाथदेवशर्मा, बालबोधिन्याख्यया, तारा पब्लिकेशन्स, वाराणसी, १९७१।
3. **ईशादिदशोपनिषदः,** शाङ्करभाष्यमेता, मोतीलालबनारसीदास, देहली, १९६४।
4. **ईशाद्यष्टोत्तरशतोपनिषदः,** पणशीकरोपाह्वविद्वद्वर लक्ष्मणशर्मतनुजनुषा, वासुदेवशर्मणा, व्यासप्रकाशन, वाराणसी, १९८३।
5. **ऐतरेयोपनिषद्,** सानुवादशाङ्करभाष्यसहिता, गीताप्रेस गोरखपुर, २००९।
6. **उपनिषद्भाष्यम्,** शङ्कराचार्यः, मोतीलालबनारसीदास, वाराणसी, १९८६।
7. **उपदेशसाहस्री,** श्रीशङ्करभगवत्पादाचार्यः, प्रो. रामकिशोरत्रिपाठी, सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः, वाराणसी, २००३।
8. **छान्दोग्योपनिषद्,** अनुवादशङ्करभाष्यसहिता, गीताप्रेस गोरखपुर, सं. २०१६।
9. **छान्दोग्योपनिषद्,** व्या. श्री एस. सुब्रह्मण्यशास्त्री, महेश अनुसन्धान संस्थानम्, वाराणसी, १९८२।
10. **तत्त्वप्रदीपिका,** चित्सुखी, स्वामीयोगिन्द्रानन्द उदासीन संस्कृत विद्यालय के १२३६/१९, ढुण्ढिराज, वाराणसी, १९८५।
11. **नैष्कर्म्यसिद्धिः,** सुरेश्वराचार्यः, भण्डारकर ओरियण्टल रिसर्च इन्स्टीट्यूट, पूना, १९२५।

12. **न्यायभाष्यम्,** वात्स्यायनमुनिः, स्वामी द्वारिकादासशास्त्री, बौद्धभारती पो. बॉ. नं. १०४९, वाराणसी १९९८।

13. **न्यायकुसुमाञ्जलिः,** उदयनाचार्यः, श्रीमहाप्रभुलालगोस्वामी, मिथिला रिसर्च इन्स्टीट्यूट, दरभंगा, १९७२।

14. **न्यायसिद्धान्तमुक्तावली,** श्रीविश्वनाथपञ्चाननभट्टाचार्यः, श्रीहरिरामशुक्लः, चौखम्भा संस्कृत संस्थान, वाराणसी, १९९७।

15. **पञ्चदशी,** श्रीमद्विद्यारण्यमुनि, रामकृष्णः, चौखम्भा संस्कृत प्रतिष्ठानम्, जवाहरनगरम्, देहली, २००८।

16. **पञ्चीकरणम्,** श्रीमच्छङ्कराचार्यः, डॉ० कलेश्वरमिश्रः, चौखम्भा संस्कृत संस्थान, वाराणसी, १९८३।

17. **पञ्चपादिका,** श्रीपद्माचार्यः, पञ्चपादिकाविवरणम्, श्रीप्रकाशात्मः, डॉ० एन. एस. रामानुजताताचार्यः, केन्द्रियसंस्कृतविद्यापीठम्, तिरुपतिः, १९८५।

18. **प्रश्नोपनिषद्,** शङ्कराचार्यः, गीताप्रेस, गोरखपुर, सं. २०१६।

19. **ब्रह्मसूत्रशाङ्करभाष्यम्,** श्रीशङ्करभगवत्पादाचार्यः, व्याख्यात्रयोपेतम्, श्रीमता डॉ० मणिद्राविडः श्रीमठप्रकाशनम्, वाराणसी, २००२।

20. **ब्रह्मसूत्रशाङ्करभाष्यम्,** श्रीशङ्कराचार्यः, (ब्रह्मतत्त्वविमर्शनीहिन्दीटीका), चौखम्भा विद्याभवन, वाराणसी, १९८८।

21. **ब्रह्मसूत्रशाङ्करभाष्यम्,** (भामती-वेदान्तकल्पतरु कल्पतरुपरिमलसहितम्), श्रीकन्यालालजोशी, परिमल पब्लिकेशन, देहली, १९८२।

22. **ब्रहदारण्यकोपनिषत्,** पं. रामचन्द्रशास्त्री, आनन्दगिरिकृतटीका संवलित शाङ्करभाष्यसमेता, वाणीविलास संस्कृत पुस्तकालय, कचौड़ी गली, वाराणसी, सं. २०११।

23. **माण्डूक्योपनिषत्,** आनन्दगिरिकृतटीका संवलितशाङ्करभाष्योपेता सगौडपादीयाथर्ववेदीय पादिन्यावर्थवेदीय।

24. **माण्डूक्यकारिका,** गौडपादीयकारिका, शाङ्करभाष्य, गीताप्रेस, गोरखपुर २००९।

25. **रत्नप्रभा,** पं. श्रीकृष्णपन्तशास्त्री, अच्युतग्रन्थमाला कार्यालय, काशी, १९९२।

26. **विवेकचूडामणि:,** श्रीशङ्कराचार्य:, गीताप्रेस, गोरखपुर, संवत् २०६८।

27. **वेदान्तसार:,** सदानन्द:, रामतीर्थ:, नेशनल पब्लिशिंग हाउस, नवदेहली, १९७८।

28. **वेदान्तसार:,** सदानन्द:, बदरीनाथशुक्ल:, मोतीलाल बनारसीदास:, वाराणसी, २००१।

29. **वेदान्तकौस्तुभप्रभा,** श्रीमतकेशवकाश्मीरिभट्ट, सम्पादक डॉ० विजयनारायणमिश्र:, सरस्वतीभवनपुस्तकालय, सम्पूर्णानन्दसंस्कृतविश्वविद्यालय, १९९२ तमे खैस्ताब्दे।

30. **वेदान्तदर्शन (श्रीब्रह्मसूत्र) द्वैताद्वैतसिद्धान्त,** व्या. महन्त श्रीस्वामी सन्तदासजी ब्रजविदेही, भारतीय कला प्रकाशन, ३४२१-ए, द्वितीय तल, नारंग कालोनी, त्री नगर, प्रथमसंस्करण- १९२९, संशोधित संस्करण-२०११।

31. **वेदान्तपरिभाषा,** श्रीमद्धर्मराजाध्वरीन्द्र:, चौखम्भा संस्कृत सीरीज, वाराणसी, १९८२।

32. **वेदान्तपरिभाषा,** श्रीमद्धर्मराजाध्वरीन्द्र:, प्रो. पारसनाथद्विवेदी, सम्पूर्णानन्दसंस्कृतविश्वविद्यालय:, वाराणसी, २०००।

33. **शास्त्रदीपिका,** श्रीमत्सोमनाथ:, श्रीधर्मदत्त: (बच्चा झा), कृष्ण अकादमी, वाराणसी, १९८८।

34. **श्वेताश्वतरोपनिषद्,** शङ्कराचार्य भाष्यसंहिता, गीताप्रेस गोरखपुर।

35. **श्रीमद्भगवद्गीता,** तत्त्वप्रकाशिकेत्याद्यष्टटीकोपेता, परिमल पब्लिकेशन, २७/२८ शक्तिनगरम्, देहली, १९८५।

36. **सर्वदर्शनसंग्रहः,** माधवाचार्यः, अभ्यंकरोपाह्वासुदेवशास्त्री, भण्डारकर ओरियण्टल इन्स्टीट्यूट, पूना, १९७८।

37. **सर्वदर्शनसंग्रहः,** माधवाचार्यः, डॉ० उमास्वामीशर्मा, चौखम्भा विद्याभवन, वाराणसी, २००५।

38. **सांख्यकारिका,** ईश्वरकृष्णः, डॉ० रामकृष्णाचार्यः, साहित्यभण्डार, सुभाषबाजारः, मेरठ, २०००।

39. **सिद्धान्तलेशसंग्रहः,** श्रीमदप्पयदीक्षितः, पं. श्रीमूकशङ्करव्यास (भाषानु.), भारतीय बुक कारपोरेशन, १,यू.बी. जवाहरनगर, बंगलोरोड, देहली, २००५।

40. **संक्षेपशारीरकम्,** श्रीमन्मधुसूदनसरस्वती, स्वामीदिव्यानन्दगिरि, श्रीकृष्णनिवास आश्रम, संन्यास रोड, कनखल, हरिद्वारम्, १९९९।



